इति शस्य सत्वे च कइईमर इति स्थिते पूर्ववत् सवर्णसंधौ प्राप्ते विकल्प । कइईमरो । कईसरो इत्याद्यूह्यम् । नात्र 'शेषादेशस्य—' इत्यादिना सस्य द्वित्वम् । 'दीर्घात्' इति प्रतिषेधात् । अपद इति किम् । वच्छाइ मुद्धाए । अत्र प्रत्युदाहरणद्वयेपि वृक्षशब्दस्य 'क्लीबे गुणगा' इति गुणादिपाठान्नपुसकत्वे 'श्चिर्शिशिड् जश्शसो' इति शिङ् । मुग्धाशब्देपि शोर्लुगित्यनुवर्तते ।

कगटडतदपें×क×पशोरपर्यद्रे ॥ १ । ४ । ७७ ॥

सयुक्तसबन्धिनामुपरिस्थितानां द्रशब्दव्यतिरिक्तानां कादीनां जिह्वामूलीयोपध्मानीययो शो शषसानां च लुक् स्यात् । इत्युपरिस्थितगलोपे 'रितो द्वित्वल्' इत्यधिकृत्य

शेषादेशस्याहोचोरगोः ॥ १ । ४ । ८६ ॥

सयुक्तयोरेकतरस्य लोपे योवशिष्यते स शेषस्तस्य सयुक्तादेशस्य च अह्र हकाररेफवर्जितस्य अच स्वरात् परस्य अरगोरनादौ वर्तमानस्य द्वित्व भवति । इति धस्य द्वित्वे मुद्धा इति स्थिते 'ङसे शशाशिशे' इत्यनेन शे सत्युभयत्राप्यनुक्तमन्यन्यायेन शास्त्रान्तरसिद्धे 'लशकतद्विते' इति सूत्रेण शलोपे इकारैकारयोरेवस्थाने गुणवृद्धिलक्षणसन्धौ प्राप्ते 'अपदे' इति प्रतिषेधान्न भवति । अत्र शिङ शे इत्यस्य च प्रत्ययत्वाभावेपि प्रत्ययादेशत्वात् तदादेशन्यायेन प्रत्ययत्वम् । तथा च मुक्त शलोप । राममल वन्दे इत्यादिषु रामस् अमलम् इति स्थिते 'लोप' इत्यधिकृत्य

अन्त्यहलोश्रदुदि ॥ १ । १ । २५ ॥

शब्दानामन्त्यहलो लोप स्याच्छ्रूदित्यव्ययमुदित्युपसर्गं च वर्जे-

---

१ °त्यनुवर्तमाने M २ °पद R ३ °रहितानां My, P ४ द्वित्व न्स्यतो द्वित्वल्लित्यधिकृत्य P ५ मुद्धा इ इति R ६ °प्यनुक्तन्यायेन M ७ °रवस्थाने सति R ८ निषेधान्न M ९ सम्भवति M १० राम अमल वन्दे इति स्थिते My, P ११ °च्छ्रूच्छब्दमुच्छब्द च वर्जयित्वा R

यित्वा । इति मलोपे प्राप्ते 'यत्तत्सम्यग्विष्वक्पृथक्को मल्' इत्यतो मलित्यधिकृत्य

**मोचि वा ॥ १ । १ । ३९ ॥**

शब्दानामन्त्यमकारस्याचि परे मो वा स्यात् । रामममल । मत्वाभावे 'बिन्दुल्' इत्यनेन सामान्यप्राप्तो बिन्दुरेव । तथा च रामअमल । एवमचि परे मस्यादेशौ सर्वत्र सचारणीयौ । बहुलाधिकारात् क्वचिदेकपदेपि सधिर्भवति । करिष्यति । काही । काहिइ ॥ द्वितीय । बीओ । बिइओ ॥ काहीत्यत्र 'ऌटसिंहाविजेचू' इति सूत्रे लड्ग्रहणस्य लकारसामान्यवाचकत्वाल्लृटोपीजादेशे सति 'भविष्यति हिरादि' इति सूत्रेण लडादेशस्य इच प्राक् हि इत्यस्य प्रयोगे 'आ भूतभविष्यति च कृञः' इत्यनेन कृञ ऋकारस्य आत्वे सति काहिइ इति स्थिते सवर्णसन्धौ कृते काही । सन्ध्यभावे काहिइ इति सिद्धम् । द्वितीयशब्देपि 'कग—' इति सूत्रेणोपस्थितदलोपे वबयोरभेदन्यायेन वकारस्य बत्वे बितीय इति स्थिते 'वा पानीयगे' इति सूत्रेण पानीयादिगणपठितस्य द्वितीयशब्दस्य सर्वेषिन ईकारस्य इत्वे सति 'प्रायो लुक्' इति तलोपे बिइअ इति स्थिते सवर्णसन्धौ कृते बीओ सन्ध्यभावे बिइओ इति द्वय सिद्धम् । नन्वत्र वबयोरभेदन्यायस्त्वसगत एव । स किं व्याकरणान्तरसिद्धत्वाद्वा अत्र शास्त्रे विधानाद्वा । नाद्य । व्याकरणान्तरे तदभेदविधानाभावात् । न द्वितीय । तद्गमकाभावात् । तस्मादसगतमेतदित्यत्रोच्यते । आद्यपक्षदूषणमस्मदिष्टमेव । द्वितीय तु न सहामहे । अभेदगमकस्य विद्यमानत्वात् । तथाहि । 'नीनीडमे वा' इत्यनेन सूत्रेण वस्य मत्व विधीयते । अत्र च स्थान्यादेशाभ्या भवितव्यम् । न चात्र सूत्रे

---

१ M drops परे २ R drops सति ३ P and R drop अपि ४ रभेद इति न्यायेन My, P ५ सवर्णघि इकारस्य My ६ इति पदद्वय M ७ 'दसंगतमेव तदिति My, P ८ दिति चेदत्रोच्यते My, P

तौ दृश्येते । तथा चानुवृत्त्या भवितव्यम् । अनुवृत्तिस्तु 'वो म शबरे' इत्यव्यवहितपूर्वसूत्रादेव वक्तव्या । तत्पूर्वतनसूत्राणामनुपयोगात् । तथा च सति बस्य स्थानित्व मस्योदेशत्व च प्रतीयते । एतच्च 'नीवीसमे या' इत्यत्र बवयोरभेदमन्तरा न घटते । एव च सति ज्ञापकादिष्टसिद्धि । तस्माल्लब्धमित्यादिप्रयोगेपु 'लवरामधश्च' इति सूत्रेणोपरिस्थितबलोपी वीओ इत्यादौ यकारस्थाने वकारोच्चारण च सिध्यति । अथ यदि ज्ञापकाद्बवयोरभेद स्यात् तर्हि 'वो य' इति सूत्रेण बस्य वत्वविधानमनर्थकमेव स्यादिति चेन्नैवम् । तद्विधानस्य नियमार्थत्वादित्यल सूत्रफलहचर्चया । ननु सधाविदमुदाहरणीभवितुमेव नार्हति । स्वरूपस्यैव दुर्घटत्वात् । तथा हि । 'कग—'इति सूत्रेणोपरिस्थितदलोपे खलु रूपसिद्धि । नात्र दलोप कर्तु शक्यते । तत पूर्वमेव 'लवराम्—'इति सूत्रेण वलोपप्रसक्ते । तर्ह्युभयलोपो भवत्विति चेदहो विस्मरणशीलता देवानाप्रियस्य यदुदाहरणस्वरूपभावमपि न जानाति । नन्वत्र पुरस्फूर्तिकत्वाद्दकारस्य वकारस्य तत्सापेक्षत्वाच्च दकारस्यैव लोपो भवतु । सत्य पुरस्फूर्तिकत्व सत्य च तत्सापेक्षत्व स्वप्रतीतौ वकारस्य । तथाप्यनुक्तमन्यन्यायेन शास्त्रान्तरसिद्धेन 'विप्रतिपेधे पर कार्यम्' इति न्यायेन 'लवराम्—'इति सूत्रस्यैव परत्वाद्वलोप एव युक्त इति नेदमुदाहरण विद्वत्कवीना कर्णरसायनीभवितुमर्हति । अत्रोच्यते । 'बहुलम्' इति बहुलग्रहणानुवृत्त्यान्यदेव कार्यं सर्वापवादेन भवतीति विप्रतिपेधन्यायमपोह्य दलोप एव भवति । यद्वा द्वितीयमाल्यादिपु 'कग—'इति सूत्रस्य 'लवराम्—' इति सूत्रस्य 'मनयाम्' इति सूत्रस्य च प्रसक्तौ सत्या 'यथादर्शन लोप' इति त्रिविक्रमदेवस्योक्तेरपीदमुदाहर्तुमर्हतीति सर्वं भद्रम् ॥

---

१ तत्प्राक्तनसूत्राणा° My, P  २ मस्यातिदेशत्व M  ३ वत्वविधानस्य My, P  ४ स्वप्रतीतौ तत्सापेक्षत्व M  ५ शास्त्रान्तरसिद्ध 'विप्र°' R

न यण् ॥ १ । १ । २० ॥

संधिरित्यनुवर्तते । 'इको यणचि' इति संस्कृतोक्त संधि प्राकृते न भवति । इवर्णादेर्यत्वादिर्न भवतीत्यर्थ । यणिति यवरलाना परिग्रहेपि प्राकृते ऋलृवर्णयो प्रयोगाभावाद्यत्ववत्वयोरेवाय निषेध ॥ पहावली अरुणो । वहू अवऊढो । प्रभावल्यरुण । वध्ववगूढ । अत्र प्रभावली अरुण । वधू अवगूढ इति स्थिते प्रभाशब्दे वधूशब्दे च 'निकषस्फटिकचिकुरे ह' इत्यतो 'ह' इत्यधिकृत्य

खघथधभाम् ॥ १ । ३ । २० ॥

असंयुक्तानामनादौ वर्तमानानामच परेषा खादीना ह स्यात् । इति भकारधकारयोर्हकार ॥ 'प्रायो लुक्—'इति गूढे गकारलोप । वलोपस्तु प्रायोग्रहणान्न भवतीति रूपसिद्धि ॥

एङः ॥ १ । १ । २१ ॥

नेत्यनुवर्तते । संधिरिति च । एङोतो संस्कृतोक्त संधि प्राकृते न भवति । लच्छीए आणदो । रुक्खादो आअओ । देवो अहिणन्दणो । लक्ष्म्या आनन्द । वृक्षादागत । देवोभिनन्दन ॥ अहो अच्चरिअमित्यादय संस्कृतवदेव सिद्धा ॥

शेषेऽच्यचः ॥ १ । १ । २२ ॥

युक्तस्य लोपे योवशिष्यते स शेष । तस्मिन्नचि अच संधिर्न भवति । फणामणिप्पईवा । जोण्हाऊरिअकेसो । फणामणिप्रदीपा । ज्योत्स्नापूरितकेश । आद्योदाहरणे 'प्रायो लुक्—' इति दकारलोपे 'पो व' इति पस्य वत्वे 'लवराम्—'इति रेफलोपे शेषस्य पस्य द्वित्वे च पकारस्थाकारस्य दलोपे शिष्टस्य च संधिर्न भवति । द्वितीयोदाहरणेपि यकारतकारयोर्लोपे त्स्नस्य 'श्नष्णस्नह्नह्ष्णा ण्ह' इति ण्हादेशे

---

१ रुक्खाओ M २ M has हज्जो after युक्तस्य ३ M has परे after तस्मिन्नचि ४ शिष्टकारस्य M1, P ५ तकारयकारयो° R

ण्हास्याकारस्य पलोपे शिष्टेन ऊकारेण सह गुणलक्षणसधिर्न भवति । बहुलाधिकारात् कचिद्विकल्प । कुम्भकार । अत्र कलोपे शिष्टेन सधिपक्षे कुंभारो सध्यभावे कुम्भआरो ॥ सुपुरुष । सूरिसो । सुउरिसो । अत्र पलोपे 'स्वदुत उपरिगुरुके' इत्यत 'उत' इत्यनुवर्तमाने

रोर्भ्रुकुटीपुरुषयोरित् ॥ १ । २ । ६० ॥

अनयो रेफसम्बन्धिन उकारस्य इत् स्यात् । इति पुरुषशब्दे रेफोकारस्येकार । कचिच्छिष्टेन नित्य सधिरेव । शातवाहन । सालाहणो । चक्रवाक । चक्काओ । अत्र 'प्रायो लुक्—'इति वलोपे शिष्टेन सह लकारस्याकारस्य सवर्णदीर्घलक्षणसधिरेव । अत्र सस्कृतशातवाहनशब्द प्रकृतिभूत । अत्र 'दोहदर्मदीपशातवाहनातस्याम्' इति तवर्गस्य लत्वम् । अथवा शालावाहनशब्दस्य सस्कृतस्य प्रकृतित्व तत्र 'ड्याषो सज्ञाछन्दसोर्बहुलम्' इति शालाशब्दस्यापो ह्रस्व । सज्ञारूपत्वात् । यद्वा सालवाहनशब्दस्य वा प्रकृतित्वम् । सर्वथा लौकिकप्रसिद्धस्य शालिवाहनशब्दस्य तु प्रकृतित्व न योयुजीति । द्वितीयोदाहरणेपि 'लवरामधश्च' इति रेफलोपे शेषस्य द्वित्वे ककारस्याकारस्य वलोपे शिष्टेनाकारेण सह सधिरेव। सालवाहणो चक्कवाओ इत्येतौ तु प्रायोग्रहणाद्वकारस्य लोपाभावे भवत । लोपे तु सधिरेव ॥

तिङः ॥ १ । १ । २३ ॥

'न' इत्यनुवर्तते । 'अच' इति 'अचि' इति च 'सधि' इति च । तिङ सबन्धिनोचोचि परे सधिर्न भवति । भवतीह । होइ इह। पिनोदकम् । पिज्ज उअअ । अत्र 'होहुवहवा भुवेस्तु—' इत्यनेन भवतेर्धातोर्हो इत्यादेशे 'लटस्तिसाविजेच्' इत्यनेन लटस्तिप इजादेशे च होइ इह इति स्थिते इकारयो सधिर्न भवति । पिज्ज उअअ

---

१ अनशिष्टेन M २ सुउरिसो सूरिसो M ३ अवशिष्टेन M ४ °प्रतीप° My ५ सस्कृतशालावाहनशब्द प्रकृतिभूतस्तस्मिन् पक्षे M ६ यायुज्यत R ७ अवशिष्टेन M ८ लोपाभावेपि R ९ स्यात् My , P १० होह बहुवा P ११ My and P drop भवति

इत्यत्रापि 'पट्टपोट्टडे[1]पिज्ञा पिनते' इत्यनेन सूत्रेण पिनते पिज्ञादेशे उदकशब्दे च दकयोर्लोपे अकारोत्तरयो संधिर्न भवति ॥ त्रिदश ईश इति स्थिते 'लवराम्—'इति रेफलोपे 'प्रायो लुक्—' इति दलोपे चोभयत्र 'शो सत्' इति शषारयो सत्वे सति तिअस ईस इति स्थिते अनुक्रमन्यायेन 'आद्गुण' इति गुणे प्राप्ते 'बहुलम्' इत्य- धिकृत्य 'शेपेष्वच' इति च

लोपः ॥ १ । १ । २४ ॥

अचोचि परे बहुल लोप स्यात् । इत्याद्यसकारस्याकारलोपे वि- असीसो ॥ एव निश्वासउच्छ्वास इति स्थिते निश्वासशब्दे 'लवराम्—' इति वलोपे

शोर्लुप्तयवरशोदि[2] ॥ १ । २ । ८ ॥

यवरशषसाना लोपे येषशिष्टा शषसास्तेषामादेरचो दीर्घो भवति । इति दीर्घे णीसास इति स्थिते शेषत्वात् सकारस्य द्वित्वे प्राप्ते[3]

दीर्घान्न ॥ १ । ४ । ८७ ॥

दीर्घात् परस्य शेषस्यादेशस्य च द्वित्व न भवति[4] । इति द्वित्व- प्रतिषेध ॥ उच्छ्वासशब्देपि

दोदोनुत्साहोत्सन्न ऊच्छसि ॥ १ । २ । ६२ ॥

उद उदित्युपसर्गस्य उकारस्य शसि शकारसकारपरयो दा दका- रेण सह ऊत्व भवत्युत्साहोत्सन्नशब्दौ वर्जयित्वा । इत्युद ऊत्वे णीसासऊसास इति स्थिते पूर्ववद्गुणे प्राप्ते 'लोप' इत्यनेन पूर्वपदा- न्त्यसकारस्याकारस्य लोपे

द्विवचनस्य बहुवचनम् ॥ २ । ३ । ३४ ॥

अस्मिन् शास्त्रे सुबन्ते तिङन्ते च द्विवचनस्य बहुवचन भवति । इति बहुवचने 'स्लुग्जश्शसो' इति जसो लोपे णीसासूसासा इति

---

१ °ड्डे P　२ इति सूत्रेण R　३ R drops प्राप्ते　४ स्यात् My, P　५ P drops उ°　६ °स्याद° My, P

सिद्धम् ॥ एव सर्वत्र सावधानेन सधितदपवादौ विज्ञाय कविभिः प्रयोगा सचारणीया ॥

इति सधिप्रक्रिया[2] ।

---

अमलस्फटिकाङ्गाय चन्द्रमःखण्डधारिणे ।
वटाधःस्थितिदक्षाय दक्षिणामूर्तये नमः ॥[3]

अथाजन्ता[4] पुलिङ्गा उच्यन्ते[5] । अकारान्त पुलिङ्गो रामशब्द[6] । अनुक्तमन्यन्यायेन प्रातिपदिकसज्ञा स्वाद्युत्पत्तिश्च । राम सु इति स्थिते 'अतो डो[7] विसर्ग ' इत्यधिकृत्य

सोः ॥ २ । २ । १३ ॥

अत परस्य सो स्थाने डो[8] भवति[9] । अनुक्तमन्यन्यायेन डिलोपटिलोपौ[10] । रामो ॥ द्विवचनस्य प्रयोगो[11] नास्तीत्युक्तमेव[12] । राम[13] जस् इति स्थिते शास्त्रान्तर इवैकशेषे[14] ।

श्रुग्जश्शसोः ॥ २ । २ । ३ ॥

नाम्न परयोर्जश्शसो श्रुक् स्यात् ॥

शिति दीर्घः ॥ १ । १ । १५ ॥

शिति परत पूर्वस्याचो दीर्घ स्यात् । रामा ॥ सबुद्धौ[15] राम सु इति स्थिते । अत्राप्यनुक्तन्यायेनैकवचनस्यैव[16][17][18] सबुद्धित्वम् ।

---

१ °तदपचारान् R २ °प्रक्रिया R ३ R omits this verse, and M puts it after अथाजन्तपुलिङ्गा उच्यन्ते ४ अथाजन्तपुलिङ्गा M ५ My and P omit पुलिङ्गा उच्यन्ते ६ My and P omit अकारान्त पुलिङ्गो रामशब्द ७ दो M ८ दो M ९ स्यात् My, P १० टिलोपदलोपौ M ११ द्विवचनप्रयोगो My, P १२ नत्युक्तमेव My, P १३ बहुष्वर्थेष्वेकरामशब्दप्रयोगे प्राप्ते शास्त्रा° My, P १४ My and P have तसाज्जसि after it १५ सबोधने My, P १६ My and P drop अत्रापि १७ अनुक्तमन्यायेन My, P १८ My and P drop एव

डोश्लुकौ तु संबुद्धेः ॥ २ । २ । ४२ ॥

'सो' इति प्राप्तो यो डो[1] यश्च 'श्लुगनपि सो' इति श्लुक् तौ डोश्लुकौ संबुद्धेरामन्त्रणार्थस्य सोस्तु भवत ॥

दे सम्मुखीकरणे ॥ २ । १ । ५९ ॥

अत्र संबुद्धिव्यञ्जकस्य हे इत्यस्य स्थाने दे इति प्रयोज्य ॥ अनुक्तमन्यन्यायेन टिलोप । दे रामा । डो इत्यस्याभावपक्षे

सोर्लुक् ॥ २ । २ । ९ ॥

नाम्न परस्य सोर्लुक् स्यात् । इति सुलोप । दे राम । नान पक्षे सो श्लुक् । इदुदन्तत्वाभावात् तदन्तविषयत्वाचस्य । एव च सेति डो इत्यस्याभावपक्षे सो श्लुकमङ्गीकृत्य 'शिति दीर्घे' इति दीर्घे प्राप्ते बहुलाधिकारान्न भवतीति पद्मापारूपमालिकाकारेण दुर्गणाचार्येणोक्त चिन्त्यम् ॥ बहुवचन पूर्ववत् । दे रामा । द्वितीयैकवचने राम अमिति स्थिते 'वीप्सार्थाचदचि सुपो मस्तु' इत्यत 'सुप' 'म' इत्यधिकृत्य

अमः ॥ २ । २ । २ ॥

नाम्न परस्य सुप्सबन्धिनोम स्थाने मकारो भवति । रामम् । अत्र 'अन्त्यहलोऽश्रुदि' इति मलोपे प्राप्ते 'मोचि वा' इत्यत 'म' इत्यधिकृत्य

बिन्दुल् ॥ १ । १ । ४० ॥

शब्दानामन्त्यमकारस्य नित्य बिन्दुर्भवति । लोपापवाद । राम ।

---

१ दो° My २ दो My ३ दो° My ४ M has च after it ५ मयुस्ते M ६ My and P drop अनुक्तमन्यन्यायेन ७ दो M ८ R omits च ९ M drops सति १० नति My, P ११ दुरुक्तम् M १२ My and P drop द्वितीयैकवचने १३ इत्यधिकृत्य R, M १४ म स्यात् My, P १५ इत्यन्त्यहलो मकारस्य लोपे M १६ इत्यधिकृत्य M, R १७ बिन्दु स्यात् P, My

राम शस् इति स्थिते 'अतो [1]डो विसर्ग' [2]इत्यत 'अत' इत्यधिकृत्य 'दिर्वा भ्यसि' [3]इत्यतो 'वा' इति च

शस्येत् ॥ २ । २ । २० ॥

अत शसि परे एद्वा स्यात् । रामे । पक्षे रामा । उभयत्रापि शस श्लुरु ॥ राम टा इति स्थिते

टो [4]डेर्णल् ॥ २ । २ । १८ ॥

[5]अत इत्यनुवर्तते । अत परस्य [6]टावचनस्य [7]डिर्त् [8]पण [9]इत्यादेशो भवति । ल्त्वान्नित्यम् । टिलोप । रामेण इति स्थिते [10]'बिन्दुल्' इत्यधिकृत्य

स्त्वासुपोस्तु सुणात् ॥ १ । १ । ४३ ॥

क्त्वाप्रत्ययस्य [11]सुपश्च सबन्धिन सुकाराण्णकाराच परो [12]बिन्दुर्भवति विकल्पेनेति णात्परो बिन्दु ।[13]रामेण रामेण ॥ राम भिस् इति स्थिते

हिंहिंहि भिसः ॥ २ । २ । ५ ॥

नाम्न परस्य भिस एते त्रय [14]आदेशा भवन्ति ॥ 'शस्येत्' [15]इत्यत 'एत्' इत्यनुवर्तमाने 'अत' इति च

भिस्भ्यः सुपि ॥ २ । २ । २१ ॥

एतेषु परेष्वत एत्व स्यात् । पृथक्त्वान्नित्यम् । रामेहि । रामेहिं । रामेहि ॥ चतुर्थ्यास्तु षष्ठ्येव । तादर्थ्यचतुर्थ्यां तु विशेष उच्यते । राम ङे इति स्थिते 'ङसो ङम्' इत्यधिकृत्य

तादर्थ्ये ङेस्तु ॥ २ । ३ । ३६ ॥

---

१ दो M   २ इत्यधिकृत्य M, R   ३ इति च R, M   ४ दे° M
५ M has अत इत्यनुवर्तते before the Sûtra   ६ तृतीयैकवचनस्य R   ७ M has स्थाने after it   ८ दि देण M   ९ इत्यादेश स्यात् P, My   १० 'बिन्दु' इत्य° M, R   ११ सुप सबन्धिन M
१२ बिन्दुर्वा स्यादिति My P   १३ रामेण रामेण M   १४ आदेशा स्यु My, P   १५ इत्यनुवर्तमाने M

डोश्लुकौ तु सबुद्धेः ॥ २ । २ । ४२ ॥

'सो' इति प्राप्तो यो टो[1] यश्च 'श्लुगनपि सो' इति श्लुक् तौ डोश्लुकौ सबुद्धेरामन्त्रणार्थस्य सोस्तु भवत ॥

दे समुरीकरणे ॥ २ । १ । ५९ ॥

अत्र सबुद्धिव्यञ्जकस्य हे इत्यस्य स्थाने दे इति प्रयोज्य ॥ अनुक्तमन्यन्यायेन टिलोप । दे रामा । डो इत्यस्याभावपक्षे

मोर्लुक् ॥ २ । २ । ९ ॥

नाम्न परस्य सोर्लुक् स्यात् । इति सुलोप । दे राम । नात्र पक्षे सो श्लुक् । इदुदन्तत्वाभावात् तदन्तविषयत्वाचस्य । एव च सति डो इत्यस्याभावपक्षे सो श्लुकमङ्गीकृत्य 'शिति दीर्घ' इति दीर्घे प्राप्ते बहुलाधिकारान्न भवतीति षड्भाषारूपमालिकाकारेण दुर्गणाचार्येणोक्त चिन्त्यम् ॥ बहुवचन पूर्ववत् । दे रामा । द्वितीयैकवचने राम अमिति स्थिते 'वीप्सार्थाचदचि सुपो मस्तु' इत्यत 'सुप' 'म' इत्यधिकृत्य

अमः ॥ २ । २ । २ ॥

नाम्न परस्य सुप्सबन्धिनोम स्थाने मकारो भवति । रामम् । अत्र 'अन्त्यहलोश्रदुदि' इति मलोपे प्राप्ते 'मोचि वा' इत्यत 'म' इत्यधिकृत्य

बिन्दुल् ॥ १ । १ । ४० ॥

शब्दानामन्त्यमकारस्य नित्य बिंदुर्भवति । लोपापवाद । राम

---

१ दो My २ दो My ३ दो° My ४ M has च aft ...न्यते M ६ My and P drop अनुचमन्यन्याये ... omits च ९ M drops सति १० नेति ... १२ My and P drop द्वितीयैकवचने ... १४ म स्यात् My, P १५ इत्यत्यहलो ... M, R १७ बिंदु स्यात् P, My

पैशाच्या[1] गिरीतो इत्यादौ 'तल् तदो' इति दकारस्य तकारार्थं चेति युक्त दकारोच्चारणम् ॥

ङसेः श्लुक् ॥ २ । २ । १५ ॥

अत इत्यनुवर्तते । अत परस्य ङसे श्लुक् स्यात् । शित्वात् पूर्वस्य दीर्घ । रामा ॥

ङसिसो हि ॥ २ । २ । १७ ॥

अत इत्यनुवर्तते । अत्रापि ङसिस इत्यनेनैकवचनबहुवचनयो परिग्रह[2] । अत परस्य ङसिस पञ्चम्या[3] हि इत्यादेशो[4] भवति । रामाहि । अत्राप्येकवचनादेशत्वाद् 'दिर्दोचोदुङसौ' इति दीर्घ ॥ भ्यसि हिंतो इत्याद्यादेशा हि इत्यादेशोपि[5] ॥

सुन्तो भ्यसः ॥ २ । २ । ७ ॥

नाम्न परस्य भ्यस सुन्तो इति भवति ॥ 'अतो डो[6] विसर्गः' इत्यत 'अत' इत्यधिकृत्य[7]

दिर्वा भ्यसि ॥ २ । २ । १९ ॥

अत इति पञ्चम्यन्तस्य षष्ठ्यन्तविपरिणाम[8] । अतो भ्यसादेशे परे दीर्घो वा स्यात् । पक्षे 'भिस्भ्य सुपि' इत्येत्वम् । रामाहिंतो रामेहिंतो । रामासुंतो । रामेसुंतो । रामाहि । रामेहि । चोदोदुषु दीर्घ एव । अत्रापि 'सयोगे' इति कृतदीर्घस्यापि[9] ह्रस्व । रामत्तो । रामाओ । रामाउ ॥ राम ङस् इति स्थिते

ङसोस्त्रिया सद् ॥ २ । २ । १० ॥

नाम्न परस्य ङस सद् इत्ययमादेशो[10] भवति न तु स्त्रियाम् । रित्त्वाद् द्वित्वम् । रामस्स । अस्त्रियामिति किम् । महिलाए । मालीए[11] । बुद्धीए । धेणूए ॥ राम आम् इति स्थिते

---

१ R has एवम् before पैशाच्या २ परिग्रहणम् M ३ पञ्चम्या स्थाने हि M ४ °त्यादेश स्यात् My, P ५ इत्यादेशो भवति M ६ दो M ७ इत्यधिकृत्य M ८ षष्ठ्यर्थो विपरिणाम M ९ R drops कृत १० मादेश स्यात् My, P ११ My and P drop मालाए

नाम्रामः ॥ २ । २ । ४ ॥

नाम परस्याम षष्ठीबहुवचनस्य णामित्यादेशो भवति । णित्वाद् दीर्घः । 'वल्लासुपोर्नु णुणात्' इति वा बिन्दु । रामाण । रामाण । नोत्रानुक्तमन्यायेन 'नुट्' इति मलोप । बहुलाधिकाराद् । साक्षात् प्रत्ययत्वाभावाद्वा ॥ राम ङि इति स्थिते 'पेतद' इत्यतो 'वा' इत्यनुवर्तमाने 'अन' इति च

टेर्ङे ॥ २ । २ । १६ ॥

अकारादुत्तरस्य ङेर्ङेदेत्व वा स्यात् । टिलोप । रामे । पक्षे

ङेर्मिर् ॥ २ । २ । ११ ॥

ङेर्मिरित्यादेशः स्यात् । रित्वाद् द्वित्वम् । रामम्मि ॥ राम सुप् इति स्थिते 'भिस्भ्य सुपि' इत्येत्वम् । 'वत्वासुपो' इति वा बिन्दु । रामेसु । रामेसु । एव शिवादयोप्यदन्ता अनुक्तविशेषा-देशा ज्ञेया ॥ सर्वनामशब्दानामकारान्तानां रूपभेदोऽस्ति । अत्रापि सर्वनाम्नामभिधेयवल्लिङ्गता । सर्व सु इति स्थिते 'ल्यराम्—' इति रेफलोपे 'शेषादेशस्य—' इति द्वित्वे चैं एकवचन रामवत् । जसि

सर्वादेर्जसोऽतो ङे ॥ २ । २ । ६२ ॥

सर्वादेरदन्तात् परस्य जस एत्व ङिद्भवति । अनुक्तमन्यन्यायेन टिलोप । सव्वे ॥ द्वितीयैकवचनमारभ्य षष्ठीबहुवचनपर्यन्त राम-वत् । आमि 'अनिदमेतदस्तु—' इत्यत 'तु' इत्यनुवर्तमाने 'सर्वादे' इति च

---

१ षष्ठी बहुवचनस्य is omitted by My and P २ त्यादेश स्यात् My, P ३ अत्रानुक्त° R ४ न णलोप R ५ My and P drop साक्षात् प्रत्ययत्वाभावाद्वा ६ समनुवर्तते M ७ अदन्तात् परस्य My, P ८ ङे सप्तम्येकवचनस्य My, P ९ ङित्वाट्टिलोप My P १० त्यादेशो भवति M ११ बिन्दुल् My, P १२ R omits च १३ अनुक्तन्यायेन R, My and P drop अनुक्तमन्यायेन

आमा डेसिं ॥ २ । २ । ६५ ॥

सर्वादेरत परस्याम' डिदेसिं इत्यादेशो वा स्यात् । टिलोप । सव्वेसिं । पक्षे णश् बिन्दुश्च वा । सव्वाण सव्वाण । अत्र आमामिति बहुवचन लिङ्गत्रयेप्येसिमादेशार्थम् । डौ

डेस्त्थसिंम्मि ॥ २ । २ । ६३ ॥

'सर्वादे' इत्यनुवर्तते 'अतः' इति च । सर्वादेरदन्तात् परस्य डे स्थाने त्थ सिं म्मि इति त्रय आदेशा स्यु । सव्वत्थ । सव्वसिं । सव्वम्मि । 'अत' इति किम् । अमुम्मि ।

अनिदमेतदस्तु किंयत्तदः स्त्रियामपि हिं ॥ २।२ । ६४ ॥

'सर्वादे' इत्यनुवर्तते । 'डेस्त्थसिंम्मि' इत्यतो 'डे' इति 'अत' इति च । इदमेतद्वर्जिताददन्तात् सर्वादे, परस्य डेर्हिं इत्यादेशो वा स्यात् किंयत्तद्वय स्त्रियामपि । सव्वहिं । पक्षे पूर्वोक्तादेशा ॥ शेष रामवत् । एव विश्वादीना रूप नेयम् । विशेषास्तु कथ्यन्ते । विश्व [illegible] —' इति वलोपे

[illegible] २ । ८ ॥

[illegible] गुसञ्ज्ञिता शषसास्तेषामादेरचो दीर्घ [illegible] ति शस्य सत्वे च वीसो । नात्र [illegible] ति प्रतिषेधात् ॥ शेष सर्ववत् । [illegible] प्राकृते 'द्विवचनस्य बहुवचनम्' इति [illegible] जस् इति स्थिते 'खघथधभाम्' इति [illegible] सर्ववत् । उभशब्दस्य उभय इति स्थिते

[illegible] हौ ॥ १ । ३ । ९८ ॥

[illegible] इत्येतयोर्यथासंख्यमवट् हेट्ठ इत्येतावादेशौ स्तः ।



[illegible] त M २ सव्वाण सव्वाण M ३ क्षेयम् M ४ My and P drop from यवरशषसानाम् to स्यात् ५ दार्घो भवति R ६ वा भवत M.

इत्युभयशब्दस्य अवहादेशो सर्ववद्रूपम्[1] । आदेशाभावपक्षे[2] मस्य द्वित्वे उहअ । उवह इत्यपि केचित् । पक्षद्वयेपि सर्ववत् प्रक्रिया[3] ॥ पूर्वशब्दस्य ।

मलिनधृतिपूर्ववैडूर्याणां[4] मइलदिहिपुरिमवेरुलिआः ॥१।३।९९॥

मलिनादीना मइलादय आदेशा वा भवन्ति । इति पूर्वशब्दस्य पुरिमादेशो । पुरिमो । पुरिमे । इत्यादि । आदेशाभावपक्षे रेफलोपे शेषस्य द्वित्वे

सयोगे ॥ १ । २ । ४० ॥

सयोगे परे[6] पूर्वस्य ह्रस्वो भवति । इति ह्रस्वे । पुव्वो । पुव्वे । इत्यादि सर्ववद्रामवच्च । ह्रस्वे कृते 'स्सो'[5] इत्युत ओत्वम् । बहुलाधिकारात् सर्वत्र न भवति । अथवा ओत्वस्यानादेशविषयत्वाद्वा परिहार ॥ एकशब्दस्य

दैवगेस्रौ ॥ १ । ४ । ९२ ॥

'रितौ[8] द्वित्वव्' ईत्यतो 'द्वित्वव्' इत्यनुवर्तते[7] । दैवादिष्वनादौ वर्तमानस्य व्यञ्जनस्य द्वित्व वा स्यात् । इति दैवादिपाठात् द्वित्वे । एक्को । द्वित्वाभावे

वैकादौ गः ॥ १ । ३ । १४ ॥

'लोपुष्पकुअकर्परर्किले को' इत्यत 'को' इत्यनुवर्तते । एकादौ को कवर्गस्य गकारो वा भवति । एगो । 'स्वार्थे तु कश्च' इत्यत 'स्वार्थे' इति 'उपरे सव्याने ल्लव्' इत्यतो 'ल्लव्' इत्यप्यधिकृत्य[9]

नवैकाद्वा ॥ २ । १ । २० ॥

नव एक आभ्या पर स्वार्थे द्विरुक्तो लो वा स्यात् । इति स्वार्थे ल्ले

---

१ सवत्र दवत् R and सर्ववत् M for सर्ववद्रूपम् २ आदेशाभावे My, P ३ My and P drop प्रक्रिया ४ वैडूर्याणां M ५ स्सु My, P ६ M drops परे ७ इत्यनुवर्तते M, R ८ रितौ वा P ९ इति च इत्यप्यधिकृत्य M, R

सति । एक्लो इत्यप्यस्ति ॥ शेष सर्ववत् । ननु एक्को एक्कलो इत्यत्र 'सयोगे' इत्येकारस्य ह्रस्व किं न स्यात् । किं तत । तदानुकन्यायेन 'एच इग्ग्रस्वादेशे' इतीकार स्यात् । ततश्च इक्को इक्लो इति स्यादिति चेन्नैवम् । 'अत्र शास्त्रे एदोतो क्वचित् स्वरूपेणैव ह्रस्व' इति त्रिविक्रमदेवेनोक्तत्वादत्र स्वरूपह्रस्वाङ्गीकारात् । एक्को । एक्लो इत्युपपन्न प्रयोग । प्रथमशब्दे प्रथम सु इति स्थिते 'टे दक्षिणेस्य' इत्यत 'अस्य' इत्यनुवर्तमाने 'उलघ्वनिगवयविष्वचि व' इत्यत 'उल्' इति च

## प्रथमे प्थोः ॥ १ । २ । २० ॥

प्रथमशब्दे पकारथकारयो सर्वन्धिनोवर्णस्य युगपत् क्रमेण चोत्व स्यात् । लित्वान्नित्यम् । इत्यवर्णद्वयस्योत्वे 'वेतस —'इत्यत 'तो' इत्यनुवर्तमाने 'ढ पृथिव्यौषधनिशीथे' इत्यत 'ढ' इति च

## प्रथमशिथिलमेथिशिथिरनिषधेषु ॥ १ । ३ । ४८ ॥

एषु तवर्गस्य ढो[4] भवति । इति थकारस्य ढत्वे युगपदकारद्वयस्योकारद्वयविधानपक्षे पुढुमो । क्रमपक्षे । पुढमो । पढुमो ॥ जसि तु पूर्ववत् । शेष रामवत् । स्वशब्दे विशेषं[5] । स्व सु इति स्थिते 'अर्हत्युच्च' इत्यत 'उत्' इत्य[6]नुवर्तमाने

## एकाचि श्वस्वे ॥ १ । ४ । १०८ ॥

एकस्वरयो श्वस्वे[7] इत्येतयो संयुक्तस्यान्त्यहल प्रागुत्व भवति । इत्युत्वे सुवो सुवे । इत्यादि । ङसिङ्यो पूर्वशब्दवत् । अन्यत्र सर्ववत् । एकाजिति किम् । स्वजन । सजणो ॥ कतमशब्दे 'सप्तपर्णे फो' इत्यत्र 'फो' इत्यधिकृत्य

---

१ सर्वन्धिवर्णस्य M २ °मेधि° R, M ३ °शिधिर° M ४ ढ स्यात् My ५ My and P omit विशेष P drops विशेष ६ इत्यनुवर्तते M ७ स्वश्च M, P ८ स्यात् My, P ९ जसि R, शसि M, इसिङो My १० अयत्र तु M ११ इत्यधिकृत्य R, M

मध्यमकतमे च ॥ १ । ३ । १४ ॥

अनयोर्द्वितीया चेत्त्वं स्यात् । 'मासो हर्—' इति ह्रस्वोऽत्र । कअमो ॥ शेषं सर्ववत् । येषां यत्र यत्र सर्वनामसंज्ञा तत्र तत्र सर्ववत् । अत्र रामशब्दवद्रूपनिर्णयः कर्तव्यः ॥

इति सर्वनामानि ॥

---

अथाकारान्तेषु केषुचित् संयुक्तादेशवशेषु विशेषाः प्रदर्श्यन्ते ।

स्तोः ॥ १ । ४ । १ ॥

अधिकारोऽयम् । 'ईर् ज्यायाम्' इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते तत् स्तो संयुक्तस्य भवतीति वेदितव्यम् ॥ वृक्षशब्दे 'स्नेहफणे नत्' इत्यतः 'रल्' इत्यधिकृत्य

खश्च वृक्षे ॥ १ । ४ । ७ ॥

वृक्षे संयुक्तस्य खो भवति । तत्संनियोगेन ऋकारस्य रुकारः । रुक्खो । रुक्खो । अस्यैव रूपान्तरम् । 'उत्सवक्षशोर्ध्वमुकसामर्थ्ये छो वा' इत्यतः 'छ' इत्यधिकृत्य

स्पृहादौ ॥ १ । ४ । २२ ॥

स्पृहादिषु क्षोऽच्छो भवति । इति स्पृहादिपठितवृक्षशब्दे क्षस्य छत्वे

ऋतोऽत् ॥ १ । २ । ७४ ॥

आदेर्ऋकारस्यात् स्यात् । इत्यत्त्वे वच्छो वच्छा ॥ शेषं रामवत् । एवं सर्वत्र विशेषादेशमात्रमुच्यते । अन्यत् सर्वं रामवद्बोध्यम् ।

---

१ 'इज्जायाम् My　२ इति ऊर्ध्वं यदुपक्रमिष्यते M　३ स्तोरिति P, My　४ प्रथम वृक्षशब्दे R　५ इत्यधिकृत्य R, M　६ वृक्षशब्दे संयुक्तस्य P, My　७ ख स्यात् My, P　८ तत्संनियोगे M　९ M has शेषं रामवत् after this　१० The passage from अस्यैव रूपान्तरम् to वच्छो वच्छा is omitted in My and R　११ M has वा देशान्तरम् after this　१२ स्पृहादिपठितस्य P　१३ वृक्षशब्दस्य P　१४ P drops क्षस　१५ °स्यात्व स्यात् P

वा रक्ते गः ॥ १ । ४ । २ ॥

रक्ते सयुक्तस्य गकारो वा भवति । 'शेषादेशस्य—'इत्यादिना द्वित्वम् । रग्गो । गत्वाभावे 'कग—'इति कलोपे शेषद्वित्वे रत्तो ॥

शुल्के ङ्गः ॥ १ । ४ । ३ ॥

वेत्यनुवर्तते । शुल्के सयुक्तस्य ङ्गो वा स्यात् । सुङ्गो । पक्षे सुक्को ॥

कः शक्तमुक्तदष्टमृदुत्वरुग्णेषु ॥ १ । ४ । ४ ॥

एषु स्तो ककारो भवति तु विकल्पेन । सक्को । पक्षे सत्तो । मोक्को । अत्र 'स्तौ' इत्युत ओत्वम् । दक्को । पक्षे 'स्त्यानचतुर्थे र्थे तु ठ' इत्यतो 'ठ' इत्यधिकृत्य

ष्टः ॥ १ । ४ । १४ ॥

ष्टस्य ठ स्यात् । आदेशत्वाद् द्वित्वम् । दट्ठो ॥ रुग्णशब्दे

हरिद्रादौ ॥ १ । ३ । ७८ ॥

'रो डा पर्याणे' इत्यतो 'र' इत्यनुवर्तते । 'लो जठरवठरनिष्ठुरे' इत्यतो 'ल' इति च । हरिद्रादौ रस्य लत्व स्यात् । इति हरिद्रादिपाठाद्रेफस्य लत्वे । लुक्को । पक्षे 'मनयाम्—'इति नलोपे द्वित्वे च । लुग्गो ॥

क्ष्वेडकगे खः ॥ १ । ४ । ५ ॥

क्ष्वेडकादिषु स्तो खकारो भवति । लित्वान्नित्यम् । 'प्रायो लुक्'—इति कलोप । खेडओ । विषम् । स्फोटके । खोडओ । स्फेटक । खेडओ । अत्र उभयत्र 'टो ड' इति टस्य डत्वम् ॥

ष्करस्कोर्नाम्नि ॥ १ । ४ । ६ ॥

---

१ स्यात् My, P २ शेषस्य द्वित्वे P, My ३ भवति वा M ४ कपारो वा for ककारो भवति तु विकल्पेन P, My ५ M has पक्षे मोत्तो after it ६ च तु र M ७ इत्यधिकृत्य M, R ८ लत्व वा स्यात् M ९ M drops न १० ख स्यात् P, My ११ खेडवो M, R १२ सोटक P १३ उभयत्रापि for अत्र उभयत्र P, My

'खल्' इत्यनुवर्तते । अनयोर्नाम्नि सज्ञाया खल् स्यात् । लित्त्वो नित्यम् । पोक्खरक्खो । पुष्कराक्ष । अत्र 'हृष्योर्कुतूहले' इत्यत 'ओत्' इत्यनुवर्तते । 'त्वदुत उपरिगुरुके' इत्यत 'उत.' इति च ।

स्तौ ॥ १ । २ । ६६ ॥

युक्ते परे उत ओत्व स्यात् । इत्योत्वम् । म्के । स्कन्ध । खधो ॥

क्षः ॥ १ । ४ । ८ ॥

'खल्' इत्यनुवर्तते । क्षस्य खल् स्यात् । क्षय । खओ । विचक्षण । विअक्खणो ॥

स्कन्दतीक्ष्णशुष्के तु खो ॥ १ । ४ । १० ॥

'खल्' इत्यनुवर्तते । एषु खोगदे सयुक्तस्य खो वा स्यात् ॥ खदो । पक्षे 'कग—'इति सलोपे अच परत्वाभावान्न शेषस्य द्वित्वम् । कन्दो । तीक्ष्ण । तिक्खो । पक्षे तिण्हो । अत्र 'श्नष्ण—' इत्यादिना क्ष्णस्य ण्ह । शुष्क । सोखो । पक्षे सोक्खो ।

स्तम्भे ॥ १ । ४ । ११ ॥

'खल्' इत्यनुवर्तते । 'तु' इति च 'खो' इति च । स्तम्भे खोरादे सयुक्तस्य खकारो वा स्यात् । खमो । पक्षे 'कग—'इति सलोपे तम्भो ।

स्थोऽस्पन्दे ॥ १ । ४ । १२ ॥

'खो' इत्यनुवर्तते । स्पन्दाभाववृत्तौ स्तम्भे खोरादे सयुक्तस्य थकारो भवति ॥ लित्वान्नित्यम् । थम्भो । सात्त्विकभाव ।

स्त्यानचतुर्थे च तु ठः ॥ १ । ४ । १३ ॥

---

१ ख for खल् M, R २ M and R drop लित्वान्नित्यम् ३ ख for खल् M, R ४ M drops तिण्हो ५ सुक्खो M ६ सुखो M ७ संयुक्तस्य खा for खोरादे संयुक्तस्य R ८ भवति M ९ थकार स्यात् My, P

अनयोश्चकारादस्पन्दवृत्तौ स्तम्भे च स्तोष्ठत्व तु भवति । ठभो । सात्त्विकभाव । पक्षे उक्त थत्वम् । चउट्ठो । पक्षे रेफलोपे द्वित्वे च चउत्थो । अत्रैव 'तु मयूरचतुर्थ—'इत्यादि सूत्रेणादेरच परेण सव्यञ्जनेन सहितस्य स्थाने वा ओत्वे चोट्ठो । चोत्थो इत्यप्यस्ति । सौराष्ट्रमहाराष्ट्रयो 'लनराम्—'इति रेफलोपे उभावपि ष्टौ तथा च 'ष्ट' इति ठत्वे ऐच एङि सोरट्ठो । महाराष्ट्रे तु ठत्वे

हश्च महाराष्ट्रे ह्रोर्व्यत्ययः ॥ १ । ४ । १११ ॥

अत्र ह्रो हकाररेफयो व्यत्यय स्थितिपरिवृत्तिर्भवति । एकस्थाने एफो भवतीत्यर्थ । हश्च दीर्घस्य ह्रस्वोपि भवति । मरहट्ठो ॥

विसंस्थुलास्थ्यधनार्थे ॥ १ । ४ । १५ ॥

'ठ' इत्यनुवर्तते । विसस्थुलास्थिशब्दयोरधनवाचिन्यर्थशब्दे च स्तो ठो भवति । विसठुलो । अर्थ । अट्ठो । प्रयोजनम् । धने तु अत्थो ॥

चः कृत्तिचत्वरे ॥ १ । ४ । १६ ॥

अनयोर्युक्तस्य च स्यात् । कृत्तिधर । किच्चिहरो । कृपादित्वात् ऋत 'इत्कृपगे' इतीत्वम् । चत्वरपर । चच्चरपरो ॥

त्योऽचैत्ये ॥ १ । ४ । १७ ॥

'च' इत्यनुवर्तते । चैत्यवर्जितस्य त्यस्य च स्यात् । प्रत्यय । पच्चओ । अमात्य । अमच्चो । अत्र 'सयोगे' इति ह्रस्व । 'अचैत्ये' इति किम् । चेइअ । अत्र 'साद्रैव्य—' इत्यादिना याव प्रागित्वम् । ऐचे एत्व यतलोपश्च । अत्रैव दैत्यादित्वात् ऐच अइ इत्यादेशे चइअ । चइच इत्यप्यस्ति ॥

---

१ विकल्पेन भवति M २ R drops च ३ एकस्य स्थाने M ४ R drops अपि ५ ठ स्यात् My, P ६ किचिहलो M ७ अत्र 'ऋत—' R ८ इति कृपादित्वादीत्व R ९ भवेदित्यादिना M १० ऐच एदित्येत्वम् M

उत्सवक्षोत्सुकसामर्थ्ये छो वा ॥ १ । ४ । १९ ॥

एषु स्तोश्छत्व वा स्यात् । उच्छवो । पक्षे

'दोदोनुत्साहोत्सन्न ऊ र्शसि' ॥ १ । २ । ६१ ॥

उद उदित्युपसर्गसबन्धिन उकारस्य शसि शकारसकारयो परयो वा दकारेण सह ऊ ऊकार स्यात् । इत्यूत्वे ऊसवो । ऋक्ष । रिच्छो । पक्षे 'क्ष' इति क्षस्य खत्वे रिक्खो । उभयत्रापि 'ऋतोत्' इत्यत 'ऋत' इत्यधिकृत्य

केवलस्य रिः ॥ १ । २ । ९० ॥

व्यञ्जनेनासयुक्तस्य ऋतो रिरित्यादेश स्यात् । इति रि । उत्सुक । उच्छुओ । ऊसुओ । अत्रापि 'दोदे—'इत्यूकार । दृष्टसामर्थ्य । दिट्ठसामच्छो । पक्षे दिट्ठसामत्थो ॥

क्षण उत्सवे ॥ १ । ४ । २१ ॥

'छ' इत्यनुवर्तते । उत्सववाचिनि क्षणशब्दे स्तोश्छ स्यात् । छणो । उत्सवे किम् । खणो । क्षण काल ।

क्षुण्णस्थगितदक्षसदृक्षेषु स्पृहादित्वात् स्तोश्छत्वे च्छुण्णो । क्षुण्णो । छइओ । स्थगित । अत्र गतयोर्लोप । दच्छो । दक्ष ॥ 'केवलस्य रि' इत्यत 'रि' इत्यधिकृत्य 'ऋतोत्' इत्यत 'ऋत' इति च

दृश्यक्सक्विनि ॥ १ । २ । ९१ ॥

अ क्स क्विन् एतदन्ते दृशिधातौ ऋतो रिरित्यादेश स्यात् । इति क्सान्तदृशिधातोर्ऋकारस्य रौ सति 'शोर्लुक्स्यचरशोर्दि' इत्यत 'दि' इत्यधिकृत्य 'आदे' इति च

---

१ My and P omit the portion from ऊ शसि to ऊकार स्यात् २ इत्यधिकृत्य M R ३ रीत्यादेश M ४ उच्छुवो M ५ ऊसुवो M ६ दोदोनुत्साहोत्सन्दे इति उद ऊकार M ७ भवति R ८ सदृक्षेषु R ९ त्यधिकृत्य M, R १० इति च M, R ११ त्या देश स्यात् My, P १२ रि इति सति M १३ M drops इत्यत

**तु समृद्ध्यादौ ॥ १ । २ । १० ॥**

समृद्ध्यादिष्वादेरवर्णस्य दीर्घो वा स्यात्[1] । इति समृद्ध्यादिपाठाद्वा दीर्घे । सारिच्छो । सरिच्छो । सदृक्ष ॥

[2]ध्यश्चत्सप्सामनिश्चले ॥ १ । ४ । २३ ॥

निश्चलव्यतिरिक्तानां थ्यादीनां छे स्यात् । भुक्तपथ्य । [3]भोत्तपच्छो । पश्चिम । पच्छिमो । मत्सर । मच्छरो । अवीप्स । अविच्छो । इत्यादि । 'अनिश्चले' इति किम् । णिचलो । अत्र 'कग—' इति शेलोपशेषद्वित्वे[4]

**द्यय्यर्यां जः ॥ १ । ४ । २४ ॥**

एषां ज स्यात् । अनवद्य । अणवज्जो । द्योत । जोओ । जय्य । जज्जो । क्षय्य । खज्जो । पर्याय । पज्जाओ । इत्यादि ॥

**ध्यह्योर्झल् ॥ १ । ४ । २६ ॥**

अनयोर्झत्व लित्स्यात् । ध्य । उपाध्याय । उवज्झाओ । अत्र 'पो व' । 'सयोगे' इति ह्रस्वश्च । विध्य । विज्झो । मध्यम । मज्झिमो । अत्र 'मध्यमकतमे च' इत्यत इ । ह्य । सह्य । सज्झो । इत्यादि ॥[5]

**र्तस्याधूर्तादौ टः ॥ १ । ४ । ३० ॥**

र्तस्य ट[6] स्यात् धूर्तादीन् वर्जयित्वा । कैवर्त । केवट्टो । सवर्तित । सवट्टिओ[7] । 'अधूर्तादौ' इति किम् । धूर्त । धुत्तो । धूर्तादि—

धूर्त । सवर्तन । वार्ता । प्रवर्तन । मुहूर्त । मूर्त । आवर्तक । सवर्तक । वार्तिक । वर्तिका । निवर्तन । आवर्तन । विवर्तन । प्रवर्तक । मूर्ति । उत्कर्तित । निवर्तक । कीर्ति । कार्तिक । इत्यादि ।

---

१ स M  २ छो भवति M  ३ भुत्तपच्छो M  ४ लोपशेषद्वित्वे M
५ M has इति वत्तम् after it  ६ M drops च  ७ सवट्टओ M
८ धूर्तसंवर्तवार्ताश्च मूर्तवर्तकवार्तिका । आवर्तनमुहूर्तौ च प्रवर्तकनिवर्तकौ ॥ कीर्ति कार्तिकमूर्ती च उत्कीर्त्यादीनि तद्गणे ॥ M

बहुलाधिकारात् वार्ताशब्दे टत्वमपि भवति ॥

**प्रवृत्तमदष्टमृत्तिवृन्तेष्टापत्तनकदर्थितोष्ट्रे ॥ १ । ४ । ३१ ॥**

'ट' इत्यनुवर्तते । एषु स्तोष्टत्व स्यात् । प्रवृत्त । पवट्टो । अत्र 'ऋतोत्' इत्यत्वम् । सदष्ट । सदट्ठो । कदर्थितशब्दे 'वेतस इति तो' इत्यत्र 'तो' इत्यधिकृत्य

**कदर्थिते र्वोर्वः ॥ १ । ३ । ४४ ॥**

अस्मिन्नादेस्तवर्गस्य थ स्यात् । इति दस्य वत्वे । कवट्टिओ । उष्ट्र । उट्टो । सन्दष्टोष्ट्रयो 'ष्ट' इत्यस्यापवाद ॥

**डल्ले फोर्मर्दितविच्छर्दच्छर्दिकपर्दवितर्दिगर्तसमर्दे ॥१ । ४ । ३३ ॥**

एषु द्वितीयस्य संयुक्तस्य नित्य डो भवति । मर्दित । मड्डिओ । विच्छर्द । निच्छड्डो । कपर्द । कवड्डो । गर्त । गड्डो । समर्द । समड्डो ॥

**ढोर्घर्द्धिश्रद्धामूर्ध्नि तु ॥ १ । ४ । ३४ ॥**

एषु स्तोर्ढो वा स्यात् । अर्धभाग । अड्ढभाओ । पक्षे अद्धभाओ ॥

**दग्धनिदग्धवृद्धिदग्धवृद्धे ॥ १ । ४ । ३५ ॥**

'द' इत्यनुवर्तते । एषु स्तोर्ढो भवति । दग्ध । दड्ढो । विदग्ध । विअड्ढो । वृद्धशब्दे ऋत्वादिपाठादत उत्वे । वुड्ढो । बहुलाधिकारात् क्वचिन्न भवति । वुद्धकनिणिरूविअं । वृद्धकविनिरूपितम् ॥

**पञ्चदशदत्तपञ्चाशति णः ॥ १ । ४ । ३६ ॥**

एषु स्तोर्णकारो भवति । दत्त । दिण्णो । अत्र स्वप्नादिपाठादत इत्वम् ॥

**ज्ञम्नोः ॥ १ । ४ । ३७ ॥**

---

१ "वेज" M  २ डो for डल् M  ३ "द" M  ४ अधद्दाओ P, My  ५ "णकार स्यात् M

ण इत्यनुवर्तते । एतयोर्ण स्यात् । सुज्ञान. । सुण्णाणो । ज्ञात । णाओ । अत्रैव

जाणमुणौ ज्ञः ॥ २ । ४ । १३० ॥

ज्ञा अवबोधन इत्यस्य जाण मुण इत्यादेशौ स्तः । जाणत इति स्थिते 'आदेर्लुक्यात्लो –' इत्यत 'अत' इत्यधिकृत्य

क्ते ॥ २ । ४ । १८ ॥

क्तप्रत्यये परेऽतोत इत्व स्यात् । इतीत्वे । जाणिओ । ज्ञात । विज्ञाणमओ । विज्ञानमय । विण्णाणमओ इत्यप्यस्ति । नात्र 'ज्ञो ञोविज्ञाने' इति प्रतिषेध । जाणादेशस्य धात्वादेशरूपत्वात् । बहुलाधिकाराज्जाणादेशो विकल्प्यत इति केचित् । तेन विण्णाणादय सिद्धा । म्न । प्रद्युम्न । पज्जुण्णो । धृष्टद्युम्न । धेट्ठज्जुणो । 'कर्णिकारे णो वा' इत्यत 'ण' इत्यधिकृत्य 'रितो द्वित्वल्' इत्यत 'द्वित्वल्' इति 'दीर्घोन्ने' इत्यत 'न' इति च

धृष्टद्युम्ने ॥ १ । ४ । ८९ ॥

अत्रादेशस्य णस्य द्वित्व न[13] स्यात् । इति णस्य न[14] द्वित्वम् । पृथक्त्वान्नित्यम् ॥

स्तवे थो वा ॥ १ । ४ । ३८ ॥

अत्र संयुक्तस्य[16] थो वा स्यात् । थवो[17][18] । पक्षे 'कग—' इति सलोपे । तवो ॥

---

१ भवत M २ 'मोमसुम्विच' इति च is added after this in M ३ परे M ४ भवति M ५ ज्ञात । जाणिओ । M ६ विज्ञानमय । निण्णाणमओ । P ७ प्रद्युम्नादय M ८ दृष्टद्युम्न । R, My, P ९ दट्ठणो R, My, P, धट्ठज्जुण्णो M १० इत्यधिकृत्य M ११ M and My drop 'दीर्घान्' इत्यत 'न' इति च १२ R has न धृष्ट° १३ M. omits न १४ नित्य for न M १५ पृथक्त्वान्नित्यम् is dropped in M १६ अत्र स्तो संयुक्तस्य M १७ M has स्तव । before it १८ थओ M १९ तओ M

**रो ह्रश्चोत्साहे ॥ १ । ४ । ३९ ॥**

'थ' इत्यनुवर्तते । 'वा' इति च । अत्र स्थो था स्यात् तत्सन्नियोगेन ह्रस्य च रेफः । उत्थारो । पक्षे 'ह्यश्यस—' इत्यादिना त्सस्य छः । उच्छाहो ॥

**स्तः ॥ १ । ४ । ४० ॥**

स्तस्य थः स्यात् । हस्तः । हत्थो । प्रस्तरः । पत्थरो ॥

**पर्यस्ते टश्च ॥ १ । ४ । ४१ ॥**

अत्र स्तस्य टः स्याच्चकारात्थश्च ॥ 'लो वार्द्रे' इत्यत 'ल' इत्यधिकृत्य

**र्यः सौकुमार्यपर्यङ्कपर्यस्तपर्याणे ॥ १ । ४ । ५५ ॥**

एषु र्यस्य लः स्यात् । इति र्यस्य लत्वे । पर्यङ्कः । पलङ्को । पैलङ्को । पलत्थो । पर्यस्तः । सौकुमार्ययुक्तः । सोअमल्लजुत्तो । अत्र ऐच एङ् । मुकुलादिपाठादुकारस्याकारः कलोपश्च । कृतपर्याणः । कअपल्लाणो । अत्रैव 'मनयाम्' इति यलोपे 'र्थ्यो बृहस्पतौ तु वहो' इत्यत 'तु' इत्यनुवर्तमाने

**रो डा पर्याणे ॥ १ । ३ । ७६ ॥**

अत्र रेफस्य डा वा स्यात् । कअपड्डाणो । 'वास्तभस्तनि पः' इत्यत 'प' इत्यभिहत्य

**ड्मक्मोः ॥ १ । ४ । ४३ ॥**

एतयोः पः स्यात् । कुड्मलः । कुंपलो । अत्र चक्रादित्वाद्बिन्दुः ।

---

१ इकारस्य M २ 'ह्यश्च' इत्यादिना M ३ M has उत्साह before it ४ पङ्को My ५ Before this M has प्रसङ्गात् सौकुमार्यपर्याणयोरपि रूपनिर्णयः क्रियते । ६ त्थो M ७ M has इति डादेशे before it ८ M has कअवड्डाणा इत्यपि भवति ९ वहो M १० पो भवति । M ११ कुपल्लो M

रक्मिणीरमण । रुप्पिणीरमणो । केचित्योपि । रुत्थिणीरमणो । क[3]चि-
न्मोपि । रुम्मिणीरमणो ॥

ष्पस्पोः फः ॥ १ । ४ । ४४ ॥

अनयो फ स्यात् । निष्पाप. । णिप्फावो । निष्पेष । णिप्फेसो । स्पन्द । फन्दो । इत्यादि ॥

भीष्मे ॥ १ । ४ । ४५ ॥

'फ' इत्यनुवर्तते । अत्र स्तो फ स्यात् । भिप्फो । भीष्म । 'श्लेष्मबृहस्पतौ तु फो' इत्यत 'तु' इत्यधिकृत्य

ग्मो मः ॥ १ । ४ । ४७ ॥

ग्मस्य मो वा स्यात् । तिग्मकिरण । तिम्मकिरणो । पक्षे मलोपे तिग्गकिरणो ॥

न्मः ॥ १ । ४ । ४८ ॥

'म' इत्यनुवर्तते । न्मस्य मे स्यात् । मन्मथ इति स्थिते 'वोव' इत्यत 'व' इत्यधिकृत्य 'त्वभिमन्यौ म' इत्यत 'म' इति च

मन्मथे ॥ १ । ३ । ६६ ॥

अत्र मस्य व स्यात् । थस्य ह्रस्व चं । वम्महो ॥

ताम्राम्रयोर्म्बः[12] ॥ १ । ४ । ४९ ॥

अनयो[13]स्तोर्म्बं स्यात् । तम्बमओ घटं ॥

इन्मयटि ॥ १ । ३ । ६९ ॥

---

१ क्वचिद्वोपि M २ रुव्विणीरमणो M ३ M drops क्वचिन्मोपि । रुम्मिणीरमणो । ४ फो भवति M ५ निष्पाव P, My, R ६ M has स्पर्श । फसो । बकादित्वाद्बिन्दु before इत्यादि । ७ भवति M ८ इत्यधिकृत्य M ९ मो भवति M १० इति च M. ११ M drops च १२ म्भे M १३ अनयोर्युक्तस्य मकारपरो भकारो भवति M १४ त म्भमओ M १५ M drops घट

मयट्प्रत्यये यस्य वा इत् स्यादिति विकल्पादिकार । तम्बमइओ । ताम्रमय इत्यर्थं । आम्र । अम्वो ॥

ऊर्ध्वे मो वा ॥ १ । ४ । ५० ॥

अत्र स्तोर्मो वा स्यात् । अतिऊर्ध्वं । अइउब्भो । अत्र तलोपे 'न यण्' इति सन्धिप्रतिषेध । पक्षे । रवलोपद्वित्वे । अइउद्धो ॥

वश्च विह्वले ॥ १ । ४ । ५२ ॥

अत्रापि स्तोर्वस्य भो वा स्यात् च्छश्च । विब्भलो । विच्छलो । पक्षे विहलो । अत्र 'अह' इति निषेधात् शेषहकारस्य द्वित्व न भवति ॥

डेरो ब्रह्मचर्यसौन्दर्ये च ॥ १ । ४ । ५७ ॥

'र्ये सोकुमार्य—' इत्यत 'र्ये' इत्यनुवर्तते । अनयोर्डित् एर इत्यादेश स्यात् । टिलोप । अणुट्ठिअबम्हचेरो । अनुष्ठितब्रह्मचर्य । दिट्ठसोंदेरो । दृष्टसौन्दर्य ॥

वा पर्यन्ते ॥ १ । ४ । ५८ ॥

'र्ये' इत्यनुवर्तते । 'डेर' इति च । पर्यन्ते र्यस्य डेरो वा स्यात् । पेरतो । पक्षे । सामान्यो ज । पज्जन्तो ॥

धैर्ये र. ॥ १ । ४ । ५९ ॥

धैर्ये र्यस्य रो वा स्यात् । धेर इति स्थिते । 'ऐच एइ' इत्यत 'ऐच' इत्यधिकृत्य

ई धैर्ये ॥ १ । २ । १०९ ॥

---

१ विकल्पेन इकार M　२ अम्भो M　३ अइऊर्ध्व M　४ रवलेति वरेफलोपशेषद्वित्वे M　५ M has 'भ' इत्यनुवर्तते । अत्र संयुक्तसम्बन्धिनो वस्य &c　६ M has वलोपे after पक्षे　७ शेषस्यापि हकारस्य द्वित्व न भवति 'अह' इति निषेधात् M　८ त्यादेशो भवति M　९ M drops टिलोप　१० ब्बह्मचरो My

अत्रैकारस्येकार स्यात् । गअधीरो । गतधैर्यः । पक्षे ज । गअ-धिज्जो ॥

तूर्यदशार्हशौण्डीर्ये ॥ १ । ४ । ६० ॥

एषु स्तो रं स्यात् । तूरघोसो । तूर्यघोष । दसारो । दशार्ह । पआसिअसोण्डीरो । अत्र 'अह' इति रस्य न द्वित्वम् । प्रकाशित-शौण्डीर्य ॥

बाष्पे होश्रुणि ॥ १ । ४ । ६१ ॥

अश्रुवाचिनि बाष्पशब्दे स्तोर्हः स्यात् । बाहो । 'अश्रुणि' किम् । बप्फो । ऊष्मा । अत्र 'ष्पस्पो —' इति फ ॥

कार्षापणे ॥ १ । ४ । ६२ ॥

अत्र स्तोर्हः स्यात् । काहावणो । कहावणो । कहावणो इत्यत्र 'सयोगे' इति पूर्वमेव ह्रस्व पश्चादादेश । यद्वा कर्षापणशब्दाद्वा सिद्धि ॥

न वा तीर्थदुःखदक्षिणदीर्घे ॥ १ । ४ । ६३ ॥

एषु स्तोर्हत्व न वा विकल्पेन भवति । तीह इति स्थिते । 'ईत काश्मीरहरीतक्योर्लो' ईत्यत 'ईत' इत्यधिकृत्य

तीर्थे ह्रूत् ॥ १ । २ । ५५ ॥

अत्र युक्तस्य हि हकारे सति ईकारस्य ऊकार स्यात् । ईत्यूकारे । कअतूहो । कृततीर्थ । पक्षे । कअतित्थो । दुहो । दु खम् । अत्र

---

१ अत्रैकारस्येकार P, R २ M has इत्तीकारे before this ३ M has 'र' इत्यनुवर्तते before it ४ रो भवति M ५ M has प्रकाशितशौण्डीय । अत्र शेषम्यादेशस्य वा रफस्य न द्वित्वम् । 'अह' इति प्रति-षेधात् । ६ स्तोर्हो भवति M ७ M has नेत्रजलम् before 'अश्रुणि' ८ ऊष्मो M ९ M has before it 'ह' इत्यनुवर्तते । १० भवति M ११ M has 'ह' इत्यनुवर्तते before it १२ इत्यधिकृत्य M १३ इत before ईकारस्य M १४ कृत before ककार M १५ इती-कारस्थाने ऊकारे M

दु खशब्दस्य कुलादिपाठाद्विकल्पेन पुंस्त्वम्। दुहिओ। दुक्खिओ। दुरित। दक्षिणशब्दे हत्वे 'शोर्चुसवचरदोर्दि' इत्येत 'दि' इत्यधिकृत्य

हे दक्षिणेस्य ॥ १ । २ । ९ ॥

अत्र युक्तस्य हे सत्यादेरवर्णस्य दीर्घ स्यात्। दाहिणो। हत्वाभावे दक्खिणो। दीर्घशब्दे हत्वे दीहो। 'नैकाद्वा' इत्यत 'वा' इति 'स्वार्थे तु कश्च' इत्यत 'स्वार्थे' इति चाधिकृत्य

रो दीर्घात् ॥ २ । १ । २४ ॥

दीर्घात् 'स्वार्थे' रो वा स्यात्। दीहरो। हत्वाभावे रेफलोपद्वित्वकृत्वा। दिग्घो। अत्र सर्वस्य शेषस्यादेशस्य वा हस्य न द्वित्वम् ॥

हो ल्हः ॥ १ । ४ । ६६ ॥

हकारस्य लाक्रान्तहकार स्यात्। महाद। पल्हाओ। अत्र 'मायो लुक्–' इति दलोप। कह्लारपर। कल्हारपरो ॥

श्मष्मस्मह्मामसाररश्मौ म्हः ॥ १ । ४ । ६७ ॥

श्मादीना म्हादेश स्यात् साररश्मिशब्दौ वर्जयित्वा। काश्मीर। कम्हारो ॥

काश्मीरे म्भः ॥ १ । ४ । ५२ ॥

अत्र श्मोर्म्भो वा स्यात्। कम्भारो। अत्रोभयत्रापि

ईत' काश्मीरहरीतक्योर्लालौ ॥ १ । २ । ५१ ॥

एतयोरीकारस्य यथाक्रम आ अ इत्यादेशौ लितौ स्त। इत्याकार। ग्रीष्म। गिम्हो। निस्मय। विम्हओ। अस्मादृश। अम्हारिसो। अत्र 'दृस्यक्सक्तीनि' इति ऋकारस्य रिकार। दलोपश्च।

---

१ पुंलिङ्गता M २ इत्यधिकृत्य M ३ M has स्वार्थे before दक्खिणो ४ इत्यधिकृत्य M ५ इति चाधिकृत्य M ६ M adds अह इति प्रतिषेधात् ७ म्हादेशो भवति M ८ म्भ इत्यादेशो वा स्यात् M ९ विम्मओ P १० रि M

म । ब्राह्मण । बम्हणो । बाम्हणो । अत्रोत्खातादिपाठसमये 'ब्राह्मण-पूर्वाह्णयोरपीच्छन्त्यन्ये' इति वचनाद्विकल्पेनाकारस्य ह्रस्व । इद वचन 'सयोगे' इति प्राप्तह्रस्वविकल्पार्थम् । 'असररश्मौ' इति किम् । सरो । रस्सी ॥

पक्ष्मणि ॥ १ । ४ । ६८ ॥

'म्ह,' इत्यनुवर्तते । अत्र क्ष्मोर्म्ह स्यात् । पक्ष्मलल्लोचन । पम्ह-ळ्ळोअणो ॥

श्नष्णस्नत्स्नह्नह्णक्ष्णां ण्हः ॥ १ । ४ । ६९ ॥

एषा ण्हादेश स्यात् । प्रश्न । पण्हो । कृष्ण । कण्हो । स्नात । ण्हाओ । प्रस्नव । पैण्हवो । ज्योत्स्नापूर । जोण्हाऊरो । अपह्नव । अव-ण्हओ । पूर्वाह्ण । पुव्वण्हो । पुव्वाण्हो । अत्रापि ब्राह्मणशब्दवद्वा ह्रस्व । अपराह्ण । अवरण्हो । श्लक्ष्ण । सण्हो । लण्हो इत्यपि केचित् ॥

सूक्ष्मे ॥ १ । ४ । ७० ॥

अत्र क्ष्मोर्ण्ह स्यात् । सुण्हो । 'हश्चोत्कुतूहले' इत्यत 'औत्' इत्यनुवर्तमाने

सूक्ष्मेद्वोतः ॥ १ । २ । ६७ ॥

अत्र ऊत ओत्व वा स्यात् । सोण्हो[12] । अतेवपक्षे सण्हो ॥

आश्लिष्टे लधौ ॥ १ । ४ । ७१ ॥

अत्र युक्तयोर्यथाक्रम लटौ स्त । श्लीत्यस्य ल । ष्ट इत्यस्य ध । आलिद्धो ॥

टठौ स्तब्धे ॥ १ । ४ । ७२ ॥

---

१ प्राप्तह्रस्वस्य निव° M २ भवति M ३ भवति M ४ पह्नवो My ५ जोण्हाऊरो My ६ अवह्नओ My ७ M inserts उत्खा-तादिपाठाद्विकल्पेन ह्रस्वे । ८ ग्रहण M ९ भवति M १० इत्यनुवर्तते M ११ ओत M १२ सोण्‌ R १३ My drops अत्वपक्षे । सण्हो ।

अत्र युक्तयोर्यथाक्रमं टठौ भवत । टट्ठो । ग्तव्य ॥

**तो ढो रथारब्धे तु ॥ १ । ४ । ७३ ॥**

आरब्धे युक्तस्य तो वा स्यात् । तत्सन्नियोगेन रस्य च द । आ-दढो । पक्षे । आरद्धो । अत्र वबयोरमेदन्यायेन 'लवराम्—' इति वलोपद्वित्वे

**शोर्लुकृग्वोः स्तम्बसमस्तनिःस्पृहपरस्परश्मशानश्मश्रुणि ॥ १ । ४ । ७५ ॥**

स्तम्बादिषु शो शषसानामादौ वर्तमानानां संयुक्तसबन्धिनां लुक् स्यात् । तम्बो । समत्तो । णिप्पिहो । अत्र स्पृहादित्वादृत इत्वम् । इदं सूत्रं 'स्त' इति सूत्रस्य 'ष्पस्पो —' इति सूत्रस्य 'श्मष्म—' इत्यादि-सूत्रस्य चापवादकम् ॥

**श्चस्य हरिश्चन्द्रे ॥ १ । ४ । ७६ ॥**

अत्र श्चस्य लुक् स्यात् । हरिअन्दो ॥

**धात्रीद्रे रस्तु ॥ १ । ४ । ८० ॥**

धात्रीशब्दे द्रशब्दे च रेफस्य वा लुक् स्यात् । धात्रीरमण । धत्ती-रमणो । लुगभावे । धारीरमणो । अत्र 'कग—' इति तलोप । ह्रस्वात् प्रागेव रेफलोपे । धाईरमणो । द्रे । चन्द्र । चन्दो । चन्द्रो । रुद्र । रुद्दो । रुद्रो । इत्यादि । ह्रदशब्दे विशेष । 'ह्रश्च महाराष्ट्रे ह्रोर्व्यत्यय ' इत्यत 'व्यत्यय ' इत्यधिकृत्य

**ह्रदे दहयोः ॥ १ । ४ । ११५ ॥**

अत्र देहयोर्व्यत्यय स्यात् । द्रह इति स्थिते । अत्रापि द्रशब्दस्य विद्य-मानत्वाद् विकल्पेन रेफलोपे । दहो । द्रहो । केचिन्नेच्छन्ति रेफलो-पम् । द्रहशब्द संस्कृतेपीति केचित् । द्रहादयस्तरुणपुरुषवाचका इत्यन्ये । भो द्रहो । भो द्रह ॥

---

१ M has लुगनुवर्तते before it २ लुग्वा स्यात् M ३ धाती रमणो My ४ हेर्व्यत्यय M ५ दकारहकारयो M

## अथ द्वित्वविधिः ॥

'रितो द्वित्वल्' इत्यत' 'द्वित्वल्' इत्यधिकृत्य

शेषादेशस्यात्रोचोरसोः ॥ १ । ४ । ८६ ॥

संयुक्तयोरेकतरस्य लोपे योवशिष्यते स शेष । तस्य संयुक्तादेशस्य च अह हकाररेफवर्जितस्य अच स्वरात् परस्य अगोरनादौ वर्तमानस्य द्वित्व स्यात् । शेषे । समस्त । समत्तो । इत्यादि । आदेशे । रक्त । रग्गो । इत्यादि । 'अह' इति किम् । विह्वल । विहलो । धैर्यम् । धीर । 'अच' इति किम् । वयस्य । वअसो । अत्र यकादित्वाद्विन्दु । 'अलो' इति किम् । णाण ॥

दीर्घात्र ॥ १ । ४ । ८७ ॥

लाक्षणिकादलाक्षणिकाच्च दीर्घात् परयो शेषादेशयोर्द्वित्व न स्यात् । निश्वास । णीसासो । अत्र 'शोर्लुक्—' इति दीर्घविधानाल्लाक्षणिकत्वम् । अलाक्षणिकात् । ईश्वर । ईसरो । पार्श्व । पासो । इत्यादि । अलाक्षणिकाद् द्वित्वाभाव प्रयोगतोनुसर्तव्य ॥

कर्णिकारे णो वा ॥ १ । ४ । ८८ ॥

अत्र णग्रहणमुत्तरार्थम् । कर्णिकारे शेषस्य द्वित्व वा स्यात् । कणिआरो । कण्णिआरो ॥

वा से ॥ १ । ४ । ९० ॥

[6]से समासे शेषादेशयोर्द्वित्व वा स्यात् । णेइग्गामो । णइगामो । नदीग्राम । णइगामो इत्यत्र

दिहौ मिथस्से ॥ १ । १ । १८ ॥

से समासे दिहौ दीर्घह्रस्वौ मिथोन्योन्य बहुल स्तं । एव समासेषु

---

१ इत्यधिकृत्य M २ भवति M ३ भवति M ४ विधानाद्दीर्घस्य लाक्षणिकाल्लक्ष° M ५ M has इत्याद्युक्तम् after लाक्षणिकत्वम् ६ M has द्वित्वल्' इत्यनुवर्तते before it ७ नदीग्राम । णइग्गामो । णइगामो M ८ भवत M

सर्वत्र दीर्घह्रस्वयोर्व्यत्ययोनुसन्धेय । प्रकृतमनुसराम । कुसुमप्रकर[1] । कुसुमप्पअरो । कुसुमपअरो ॥

**प्रमुक्तगे ॥ १ । ४ । ९१ ॥**

'वा से' इति सर्वमनुवर्तते । प्रमुक्तादिषु समासे यथादर्शन व्यञ्जनस्य द्वित्व वा स्यात् । प्रमुक्त । पम्मुक्को । पमुक्को । अत्र 'क शक्त—' इत्यादिना क्तो क्क । सेप्पवासो[2] । सपवासो । वद्धप्फलो[3] । वद्धफळो । वद्धफल' । मळअस्सिहरिस्सिहडो । मलअसिहरिसिहडो । मलयशिखरिशिखण्ड' । त्रैलोक्यनाथ । तेल्लोक्कणाहो । तेळोक्कणाहो । सपरिताप । सप्परितावो । सपरितावो । परवश । परव्वसो । परवसो । प्रतिकूल । पडिक्कूळो । पडिकूळो । अदर्शन । अद्दसणो । अदसणो । अत्र वक्रादित्वाद्बिन्दु । [4]आकृतिगणत्वात् । पफुल्लम् । प्रप्फुल्ल । पफुल्ल । सपरिहासम् । सप्परिहास । सपरिहास । इत्यादि सिद्धम् । ननु पडिकूळ इत्यत्र लोपलक्षणलक्षितत्वात् 'मायो लुक्—' इति कलोप किं[5]मिति न । उच्यते । [6]अत्र सूत्रे समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि भवतीत्युक्तत्वात् यदा भिन्नपदत्व तदा कादीनामादित्वाल्लोपो न भवति । एकपदत्वपक्षे तु लोप एवेत्युभयमप्यस्तीति सतोष्टव्यम् ॥

**दैवगेखौ ॥ १ । ४ । ९२ ॥**

दैवादिष्वनादेर्यथादर्शन व्यञ्जनस्य द्वित्व वा स्यात् । दैवपर । देव्वपरो । देवपरो । व्याकुल । वाऊल्लो । वाउळो । नीड । [7]नेड्डो । नेडो । अत्र 'एल्वीडनीडकीदृश—' इत्यादिना ईकारस्य[8] एकार । निहित । णिहित्तो । णिहिओ । स्थूल । थुल्लो[9] । थूलो । अत्र 'कग—' इति सलोप । ननु थुल्लो इत्यत्र '[10]स्तौ' इत्युत ओत्व किमिति न[11] । बहुलाधिकारात् । अत्रैव

---

१ M has इत्याद्यूह्यम् after it २ सप्पळावो । सप्रलाप । M ३ वद्धफल । वद्धफलो । वद्धप्फलो । M ४ वक्रादेराकृति° M ५ कस्मान्न भवति M ६ तत्र M ७ नेडो । नेड्डो । M ८ ईत एत् । M ९ थूलो । थुल्लो । M १० स्थाने for स्तौ M ११ M adds भवति after it

स्थूले रल्तथौत् ॥ १ । ३ । ८३ ॥

'लो ललाटे च' इत्यत 'ल' इत्यनुवर्तते । स्थूले ऊकारस्यौत् स्यात् तत्सन्नियोगेन लस्य च र । थोरो । व्याहृत । वाहिओ । वाहिओ । अत्र कृपादित्वादृत इत् । तलोपश्च । मूक । मुक्को । मूओ । इत्यादि । दैवादि —दैवव्याहृतव्याकुलनीडनिहितमांत्रृकउकुतूहलस्थूलएकतूष्णीक-मूकसेवाअस्मदीयहुतस्त्यानशाणु । इत्यादि ॥

तैलादौ ॥ १ । ४ । ९३ ॥

तैलादौ यथादर्शनमन्त्यस्यानन्त्यस्य व्यञ्जनस्य द्वित्व-भवति । पृथक्त्वानित्यम् । तैलप्रिय । तेल्लप्पिओ । मण्डूक । मण्डुक्को । इत्यादि । तैलादि—तैलव्रीडाप्रेमस्रोत प्रभूतमण्डूकयौवनऋजुविचैकि-विल । इत्यादि ॥

पूर्वमुपरि वर्गस्य युजः ॥ १ । ४ ।९४ ॥

वर्गसबन्धिनो युग्वर्णस्य शेषस्यादेशस्य वा द्विरसप्रसङ्गे उपरि पूर्वा-क्षर स्यात् । वर्गाणां द्वितीयस्योपरि प्रथम चतुर्थस्योपरि तृतीयमिति वेदितव्यम् । रुक्खो । विग्घो । लच्छी । णिज्झरो । णिट्ठुलो । इत्यादि बोध्यम् ॥

प्राक् श्लाघाद्यक्षशार्ङ्गे ङ्गोत् ॥ १ । ४ । ९५ ॥

श्लाघादिषु ङ्ग ङकारलकारयो प्रागत् स्यात् । श्लाघायुत । सला हाजुओ । ह्लक्ष । पलक्खो । क्षस स । शार्ङ्गधर । सारङ्गहरो ॥

क्ष्मारत्नेन्त्यहलः ॥ १ । ४ । ९६ ॥

'प्राक्' इत्यनुवर्तते । 'अत्' इति च । अनयोर्युक्तस्यान्त्यहल प्रागत् स्यात् । रत्नाकर । रअणाअरो । क्ष्माधर । छमाहरो । अत्र 'उत्सव-ऋक्ष—' इत्यत 'छ' इत्यनुवर्तते ॥

---

१ हल् M २ मृदुत्व for मातृक M ३ विचिकिल M ४ वर्गयुज M ५ द्वित्वम् । प्रसङ्गे सति उपरि &c M ६ दिग्घा M ७ M drops णिट्ठुलो ८ बोद्धव्यम् M ९ प्रागत् अकारो भवति M १० अन योर्युक्तस्या° M ११ छमाहरो M

क्ष्माया कौ ॥ १ । ४ । २० ॥

भूवाचकक्ष्माशब्दे क्षस्य छ स्यात् । अत्र यो भूवाचको मुख्य क्ष्माशब्द: यश्च 'क्ष्मारत्नेन्त्यहल' इत्यनेन युक्तयोर्मध्ये अकारविधाने लाक्षणिको भूवाचक क्ष्माशब्दस्तयोर्द्वयोरपि ग्रहणम् । तेनोभयत्रापि छ ॥

स्नेहाग्न्योर्वा ॥ १ । ४ । ९७ ॥

अनयोर्युक्तस्यान्त्यहल प्रागत्व वा । सणेहो । पक्षे 'कग—' इति सलोपे । णेहो । अग्निवर्ण । अगणिवण्णो । पक्षे । 'मनयाम्' इति न लोपे । अग्गिवण्णो ॥

र्शर्षवज्रतप्तेष्वित् ॥ १ । ४ । ९८ ॥

र्शर्ष एतयो र्वज्रतप्तशब्दयोश्च युक्तस्यान्त्यहल प्रागित्व वा । आदर्श । आअरिसो । पक्षे । 'लवराम्—' इति रेफलोपे 'शोर्लुप्त—' इति दीर्घ । आआसो । आदर्श । दरिसो । दासो । इत्यादि । र्षे । वर्षज । वरिसओ । वासओ । अत्र 'शोर्लुप्त—' इति दीर्घ । तप्त । तविओ । तत्तो । वज्रधर । वइअहरो । अत्र जलोप । वज्जहरो । नात्र जलोप ॥

हर्षामर्षश्रीह्रीक्रियापरामर्शकृत्स्नदिष्ट्यार्हे ॥ १ । ४ । ९९ ॥

हर्षादिषु युक्तस्य र्हे इत्यत्रान्त्यहल प्रागित्व स्यात् । पृथक्त्वाधित्यम् । हरिसो । अमरिसो । श्रीधर । सिरिहरो । तत्र 'क्विप' इतीकारस्य ह्रस्व । ह्रीयुत । हिरिजुओ । क्रियापर । किरिआवरो । परामर्श । परामरिसो । कृत्स्न । कसिणो । अत्र 'कग—' इति तलोप । 'ऋतोत्' इत्यत्र च । र्हे । बर्हधर । बरिहहरो । इत्यादि ॥

स्याद्भव्यचैत्यचौर्यसमे यात् ॥ १ । ४ । १०० ॥

एषु चौर्यसमेषु सयुक्तस्य यकारात् प्रागित्व स्यात् । स्याद्वाद ।

---

१ तप्तवज्रशब्दयो° M २ दृष्टाई My ३ इत्यत्रान्त्य° M ४ अत्र M
५ लोप My ६ इत्यमनुवर्तते ॥ in M before this

सिआवाओ । भव्य । भविओ । चैत्यपर । चेइअपरो । अत्रैकारस्य एकारस्तयलोपश्च । चौर्यकुशल । चोरिअकुसलो । चौर्यशब्दस्याङ्गुल्यादिपाठाद्वा स्त्रीलिङ्गताया चोरिआकुसलो इत्यपि । चौर्यसमास्तु— चौर्यैश्वर्यधैर्यगाम्भीर्यभार्यासौन्दर्यब्रह्मचर्यसूर्यशौर्यवीर्यवर्यचर्याचार्यपर्यङ्का । चौर्यादिराकृतिगण ॥

लादक्लीबेषु ॥ १ । ४ । १०१ ॥

सयुक्तस्य लात् प्रागित्व स्यात् क्लीबमकारेषु वर्जयित्वा । क्लिष्टवास । किलिट्ठवासो । क्लान्तमुख । किलन्तमुहो । अत्र 'सयोगे' इति लकारस्याकारस्य ह्रस्व । प्लुष्टवाप । पिलुट्ठवापो । प्लोष । पिलोसो । श्लेष । सिलेसो । शुक्लक्लेदक्लिन्नक्लेशम्लानेत्यादि । 'अक्लीबेषु' इति किम् । क्लीब । कीओ । विक्लव । विक्कओ । क्लम । कमो । प्लव । पवो । विप्लव । निप्पवो । शुक्लपक्ष । सुक्कपक्खो । उभय तिङन्तेपि समानम् ॥

नास्स्वप्ने ॥ १ । ४ । १०२ ॥

स्वप्ने नात् प्रागित्व स्यात् । इतीत्वे । 'पो व' इति पस्य वत्वे च वनयोरभेदन्यायात् 'वो म शबरे' इत्यधिकृत्य

नीवीस्वप्ने वा ॥ १ । ३ । ८५ ॥

अनयोर्वस्य मो वा स्यात । 'स्वप्नादाविल्' इत्यस्य इत्वे । सिमिणो । पक्षे । सिविणो ॥

स्निग्धे त्वदितौ ॥ १ । ४ । १०३ ॥

अत्र नात् प्रागित्वमत्व च वा स्यात् । सिणिद्धो । सणिद्धो । पक्षे 'कग—' इति सलोपे । णिद्धो ॥

कृष्णे वर्णे ॥ १ । ४ । १०४ ॥

---

१ भवति M २ न भवति for वर्जयित्वा M ३ सुक्लपक्खो My ४ M has इत्वमनुवर्तते before this ५ M has इति वस्य मत्वे before it ६ M has नादित्वमनुवर्तते ७ प्रागत्वमित्व च वा स्यात् M

वर्ण[1]वा[2]चिनि कृष्णशब्दे नात् [3]प्रागदितौ वा स्त । [4]कसिणो । कसणो । पक्षे 'श्नष्ण—' इत्यादिना ष्णस्य ण्ह । कण्हो । 'वर्णे' इति किम् । कण्हो । विण्हु । 'अर्हत्युच—' इत्ये[5]त 'उ' इत्यधिकृत्य

**सुघ्ने रात् ॥ १ । ४ । १०७ ॥**

अत्र रात् प्रागुत्व [6]स्यात् । 'मनयाम्' इति नलोप । सुरुग्घो । [7]सुघ्नं नगरम् ॥

**वा च्छद्मपद्ममूर्खद्वारे ॥ १ । ४ । १०९ ॥**

[8]एषु स्तोरन्त्यहल प्रागुत्व वा स्यात् । छद्मपर । छउमपरो । पद्ममुख । पउममुहो । पक्षे । 'कग—' इति दलोपे म[9]कारे शिष्टे सति । 'ओदाल्या पङ्क्तौ' इत्ये[10]त 'ओत्' इत्यधिकृत्य

**पद्मे मि ॥ १ । २ । ३१ ॥**

पद्मे आदेरत ओत्व [11]स्यान्मकारे [12]परे [13]सति । पोम्ममुहो [14]मूर्ख । मुरुहो । अत्रादावेव 'सयोगे' इति ह्रस्व पश्चादुत्व[15]म् ॥

**ईर्ज्यायाम् ॥ १ । ४ । ११० ॥**

अत्रान्त्यहल प्रागीत्व लित् स्यात् । [16]ज्यावर । जीआवरो । 'हश्च महाराष्ट्रे ह्रोर्व्यत्यय' इत्ये[17]त 'व्यत्यय' इत्यधिकृत्य

**लनोरालाने ॥ १ । ४ । ११२ ॥**

'स्तो' इति निवृत्तम् । अत्र लकारनकारयोर्व्यत्यय स्यात् । आणालो ॥

---

१ M has अदितौ नादिति चानुवतते । २ °वाचककृष्ण° M ३ प्राग स्त्वमित्व च वा भवत M ४ कसणो । कसिणो M ५ इत्यधिकृत्य M ६ भवति M ७ M drops सुघ्न नगरम् ८ M has उत्वमनुवतते । 'क्ष्मारत्न-' इत्यत 'अन्त्यहल' इत्यनुवतते । befoie this ९ मकारेव शिष्टे M १० इत्यधिकृत्य M ११ भवति for स्यात् M १२ M drops परे १३ M has इत्योत्वे after सति । १४ M drops मूर्ख । मुरुहो १५ M has द्वारं । दुवार after this १६ ज्यापर । R १७ इत्यधिकृत्य M

**चलयोरचलपुरे ॥ १ । ४ । ११६ ॥**

'व्यत्यय' इत्यनुवर्तते । अचलपुरशब्दे चलयोर्व्यत्ययः स्यात् । अचलपुरधर्म । अल्अपुरधम्मो ॥

**ह्रे ह्रोर्वा ॥ १ । ४ । ११७ ॥**

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा स्यात् । सह्य । सय्हो । पक्षे । सज्झो । इत्यादि ॥

**लघुके लहो[1] ॥ १ । ४ । ११८ ॥**

'लघुकशब्दे[2] घस्य हत्वे [3]लकारहकारयोर्व्यत्ययो वा स्यात । हलुओ । पक्षे । लहुओ । घस्य व्यत्यये कृते पदादित्वाद्धस्य न भवतीति हकरणम् ॥

**रलोर्हरिताले ॥ १ । ४ । ११९ ॥**

अत्र रलोर्व्यत्ययः स्यात् । हलिआरो ॥

**दर्वीकरनिवहौ दब्विरअणिहवौ तु ॥ १ । ४ । १२० ॥**

दर्वीकरनिवहशब्दौ यथासंख्य दब्विरअणिहवौ तु भवतः । दब्विरओ । णिहवो ॥ सज्जन सु इति स्थिते 'लोप' इत्यधिकृत्य

**अन्त्यहलोऽश्रदुदि ॥ १ । १ । २५ ॥**

शब्देष्वन्त्यहलोऽन्त्यव्यञ्जनस्य लोपः स्याच्छ्रदित्यव्ययमुदित्युपसर्गं च वर्जयित्वा । इति सज्जनशब्दस्य समासत्वात् समासे पदविभक्त्यपेक्षया वाक्यविभक्त्यपेक्षया चान्त्यत्वमनन्त्यत्वं च भवतीति न्यायेन यदा पदविभक्तिस्तदा तलोपे सजणो । यदा वाक्यविभक्तिस्तदा [4]लोपाभावे सज्जणो । एवं तद्गुणादयः ॥

**निर्दुरि वा ॥ १ । १ । २६ ॥**

निर् दुर् इत्येतयोरुपसर्गयोरन्त्यहलो लोपो वा स्यात् । निस्सह ।

---

१ °हुर° R २ M has लघुशब्दे घस्य हत्वे before it ३ M drops लघुकशब्दे घस्य हत्वे ४ अत्र रहयो for लकारहकारयो M ५ वा व्यत्यय M ६ तलोपाभावे M

णिसहो । लोपाभावे । णिस्सहो । अत्रैव 'लवराम्—' इति रेफलोपे 'शोर्लुस–' इति दीर्घे । णीसहो । एव निर्घोषादय । दु सह । दुम्सहो । दुस्सहो । दु खित । दुहिओ । 'दोदोनुत्साहोत्सन्नऊच्छसि' इत्यत 'ऊत्' इत्यधिकृत्य

दुरो रलुकि तु ॥ १ । २ । ६३ ॥

दुरित्युपसर्गस्य रलुकि रेफलोपे सत्यादेरुत ऊद्वा स्यात् इत्यूकार । दूसहो । दूहिओ । यदा लोपाभावस्तदा । दु सहो[4] ॥

अन्तरि च नाचि ॥ १ । १ । २७ ॥

अन्तर् शब्दे चैकारान्निर्दुरोश्चाचि परे लोपो न स्यात् । अन्तरात्मा । अन्तरप्पा । निरन्तर । णिरन्तरो । निरवशेष । णिरवसेसो । निरवगाह । णिरवगाहो । दुरुत्तर । दुरुत्तरो । क्वचिदन्ता उपरि इति च दृश्यते । बिन्दुल्' इत्यधिकृत्य

हलि ङञणनानाम् ॥ १ । १ । ४१ ॥

'अन्त्यहल' इति निवृत्तम् । एषा हलि व्यञ्जने परे बिन्दु स्यात् । पराङ्मुख । परमुहो । 'स्वरस्य बिन्दमि' इति ह्रस्व । कञ्चुक । कञ्चुओ । इत्यादि ॥

स्वरेभ्यो वक्रादौ ॥ १ । १ । ४२ ॥

वक्रादिषु यथादर्शन प्रथमादिभ्य स्वरेभ्य परो बिन्दुर्भवति । अत्र गणत्रयम् । वक्रादिगण । मनस्विन्यादिगण । उपर्यादिर्गण । तत्र वक्रादि । वक्र । कुड्मल । गुच्छ । पुच्छ । बुध्न । गृष्टि । कर्कोटक । दर्शन । पशु । स्पर्श । स्थ्यश्रुत्र्यश्रमार्जारवृश्चिकमूर्धा प्रथमात् । मनस्विन्यादि —मनस्विनीमतिश्रुन्मन शिलावयस्याना द्विती-

---

१ My omits दुसहो २ M omits दुस्सहो ३ दहिओ M ४ M has इत्यप्यस्ति after it ५ चापि° M ६ भवति M ७ वक्रम् My ८ गणश्च M ९ M drops तत्र १० पुच्छ । गच्छ । M ११ पार्श्व for स्पर्श M

यात् । उपर्यतिमुक्तामुक्तकेत्यादीना तृतीयात् । वंक । वको । कुं-
ट्मल । कुपलो । अत्र 'ट्ठमो' इति पै । गुच्छ । गुछो । पुच्छ ।
पुछो । बुध्न । बुधो । कर्कोटक । ककोडओ । अत्र

टो डः ॥ १ । ३ । २१ ॥

असयुक्तस्यानादौ वर्तमानस्याच परस्य टस्य ड स्यात् । इति ड ।
मार्जार । माजारो । क्वचिन्मज्जारो इति च दृश्यते । विंछुओ । अत्र

श्चेर्ष्टश्चिके श्रुर्वा ॥ १ । ४ । १८ ॥

अत्र श्चि इत्यस्य श्चु इत्यादेशो वा स्यात् । आदेशाभावे 'व्यथ—'
इत्यादिना च्छ । 'इल्कृपगे' इतीत्वम् । विंछुओ । कचिच्छन्द पूर-
णेपि बिन्दु । देवणोअसुवत्तो । देवनागसुवक्र । 'डे तु किंशुके'
इत्यधिकृत्य 'बिन्दुल्' इति च

वर्गेन्त्यः ॥ १ । १ । ४७ ॥

बिन्दोर्वर्ग्ये मरे प्रत्यासन्नो यो वर्ग्यस्तस्यैवान्त्यो वा स्यात् । वङ्को ।
कुम्पलो । गुन्घो । इत्याद्यपि । अत्र बिन्दोर्वर्गान्तादेशो नित्य इति
केचित् । मनस्विन्यादि । वअसो । वअस. ॥

लुग् मासादौ ॥ १ । १ । ४४ ॥

'बिन्दुल्' इत्येतस्य षष्ठ्यन्तविपरिणाम । 'क्त्वास्युपोस्तु सुणात्'
इत्यत 'तु' इति चाधिकृत्य । बिन्दोर्मासादिपु लुग्वा स्यात् । मास-
विकार । मासविआरो । मासल । मामलो । कार्स्यविकार । कास-
विआरो । एषु सर्वेषु 'आचार्ये चो ह्रश्च' इत्येत 'ह्र' इत्यधिकृत्य

स्वरस्य बिन्द्वमि ॥ १ । २ । ३९ ॥

---

१ M has वक्रो । वक २ कुपलो । कुद्मल । M ३ रिति टमस्य M ४ विंछुओ My ५ देव ण्णाअ My ६ M has अनुवर्तते after इति च ७ वर्गान्त्यादेशो My ८ मासादौ M ९ इत्यस्य M १० इत्यधिकृत्य M ११ M has मासविआरो after मासविआरो १२ M has मासलो after it १३ M has कमविआरो after it १४ इत्यधिकृत्य M

अमि द्वितीयैकवचने निन्दौ च परे स्वरस्य ह्रस्व स्यात् । मसंलो । ममविआरो । इत्यादि । मासादि—मास । मासल । पार्सु । कास्य । कथम् । इदानीम् । तदानीम् । किं करोमि । समुखम् । नूनम् । एवम् । इत्यादि ॥

संस्कृतसस्कारे ॥ १ । १ । ४५ ॥

'लुक्' अनुवर्तते । 'निन्दो' इति च । अनयोर्निन्दोर्लुक् स्यात् । सस्कृत । संकओ । सस्कार । सक्कारो ॥

डे तु किंशुके ॥ १ । १ । ४६ ॥

'निन्दो' इत्यनुवर्तते । अत्र बिन्दोर्डानुबन्ध एकारो वा स्यात् ॥ केसुओ । किंसुओ ॥

विंशत्सिषु त्या श्लोपश्च ॥ १ । १ । ४८ ॥

विंशतिप्रकारेषु ति इत्यक्षरेण सह बिन्दोर्लोप स्यात् । शित्वात् पूर्वस्य दीर्घ । इति विंशतिगणपठिते सिंहशब्दे बिन्दो श्लोपलि पूर्वस्य दीर्घे । सीहो । सिंघो इत्यपि नास्ति दृश्यते । सिंघदत्तो । सिंघराओ । अत्र लित्वाद्बिन्दोर्लोपे 'नित्येपि दृश्यते' इत्युक्त्या लोपाभाव । तथा च 'हस्व घो निन्दो' इत्यनेन सूत्रेण निन्दो परस्य हस्य घ सिद्ध । विंशत्यादि—विंशति । त्रिंशत् । दंष्ट्रा । सिंह । इत्यादि । 'स्त्रमदामशिरोनभो नरि' इत्यत 'नरि' इत्यधिकृत्य

अक्ष्यर्थकुलाद्या वा ॥ १ । १ । ५१ ॥

अक्षिपर्याया कुलादयश्च नरि पुलिङ्गे वा प्रयोक्तव्या । लोअणो । लोअण । णअणो । णअण । कुलादि—कुलो । कुल । वअणो । वअण । कुलवचनमाहात्म्यात् दु समाजनविद्युच्छन्द इत्यादि ॥

---

१ भवति M २ मसविआरो । मसलो । M ३ इत्याद्यपि भवति M ४ कास्य । पासु । M ५ M drops तदानीम् ६ लुगित्यनुवर्तते M ७ सस्कार । सकओ । M ८ भवति M ९ इति च for इत्यपि नास्ति M १० इत्यधिकृत्य M ११ My drops the portion from णअणो to वअण १२ M has इत्यादि after णअण

क्लीबे गुणगाः ॥ १ । १ । ५२ ॥

'वा' इत्यनुवर्तते । गुणादयः शब्दा नपुंसके वा प्रयोक्तव्या । गुणो । गुणं । मंडलग्गो । मंडलग्गं । गुणादि—गुण । देव । मंडलाग्र । खङ्ग । कण्ठ । बिन्दु । करहह । वृक्ष । इत्यादि । पृष्ठशब्दे

'स्त्रियामिमाञ्जलिगाः ॥ १ । १ । ५३ ॥

इमान्ता अञ्जल्यादयश्च शब्दाः स्त्रीलिङ्गे वा प्रयोक्तव्याः । इत्यञ्जल्यादिपाठात् स्त्रीलिङ्गेऽपि प्रयोगः । पिट्ठी । पिट्ठं । अत्र 'इल्ह्रपगे' इत्यंत 'इल्' इत्यधिकृत्य 'श्रृङ्गमृगाङ्गमृत्युदष्टमसृणेषु वा' इत्यत 'वा' इति 'ऋतोत्' इत्यत 'ऋत' इति च

पृष्ठेऽनुत्तरपदे ॥ १ । २ । ७८ ॥

पृष्ठशब्देऽनुत्तरपदे ऋत इत्व वा स्यात् । पक्षे 'ऋतोत्' इत्यत्नम् । इत्व स्त्रियामेवेत्येके । 'अनुत्तरपदे' इति किम् । महिपट्ठं । अञ्जल्यादि—अञ्जलि । बलि । निधि । प्रश्न । रश्मि । अक्षि । ग्रन्थि । विधि । कुक्षि । चौर्य । पृष्ठ । इत्यादि । इमान्ता इत्यत्र 'पृथ्व्यादिभ्य इमनिज्वा' इति य इमनिच् यश्च 'त्वस्य तु डिमात्तणौ' इति त्वमत्ययादेश इमनिच् तयोर्द्वयोरपि तन्त्रेण ग्रहणम् । तेनोभयोरपि विकल्पेन स्त्रीत्वम् । त्वादेशस्य नित्य स्त्रीत्वमेवेच्छन्त्येके ॥

निष्प्रत्योरोत्परी माल्यस्थोर्वा ॥ १ । २ । १ ॥

निर् प्रति इत्येतावुपसर्गौ माल्यशब्दे स्थाधातौ च परे ओ परि इत्येतद्रूपौ यथासंख्य वा स्तः । निर्माल्यम् । ओमल्लं । णिम्मल्लं । प्रतिष्ठितं । परिट्ठिओ । पइट्ठिओ ॥

आदेः ॥ १ । २ । २ ॥

'आदे' इत्यधिकारः 'यमस्तोरखोरच' इति सूत्रात् प्रागेव वेदितव्यः ॥

---

१ क्लू द M २ M has 'वा' इत्यनुवर्तते before it ३ पिठी M, ४ इत्यधिकृत्य M ५ 'ऋतोत्' इति च M ६ मेवत्येके M ७ भवन M

शोर्लुप्तयवरशोर्दिः ॥ १ । २ । ८ ॥

यवरशषसानां लोपे येवशिष्टा शषसास्तेषामादेरचो दीर्घे स्यात् । कश्यप । कासवो । अश्व । आसो । विश्रम । वीसमो । दु शा-सन । दूसासणो । शिष्य । सीसो । कर्षक । कासओ । वर्ष'[1] । वासो । षस्य लोपे । निष्षिक्त । णीसित्तो । कृतसस्य । कअसासो । निस्सर । विआसरो । उस्त्र । ऊसो । विस्रम्भ । वीसम्भो । नि सह । णीसहो । एव तिङन्तेप्यूह्यम् ॥ 'शोर्लुप्तयवरशोर्दि' इत्यत 'दि' इत्यधिकृत्य 'हे दक्षिणेस्य' इत्यत 'अस्य' इति च

तु समृद्ध्यादौ ॥ १ । २ । १० ॥

समृद्ध्यादिष्वादेरवर्णस्य वा दीर्घे स्यात् । पासुत्तो । पसुत्तो । प्रसुप्त । आफंसो । अफंसो । अस्पर्श । अत्र 'प्पस्पो —' इति फत्वम् । वक्रादित्वाद्बिन्दु । पारोहो परोहो । प्ररोह । समृद्ध्यादि—समृद्धि[2] । प्रतिसिद्धि । प्रतिपद् । प्रवासी । अभिजाति । प्रकृत । प्रवचन[3] । प्ररोह । परकीय । चतुरन्त । अस्पर्श । प्रस्तुत[4] । प्रकट । प्रसुप्त । सदृक्ष । मनस्विनी । इत्यादि ॥

स्वप्नादाविल् ॥ १ । २ । ११ ॥

स्वप्नादिष्वादेरवर्णस्येत्व[5] लित् स्यात् । क्रिविणो[6][7] । कृपण । अत्र 'इल्कृपगे' इति इ[8] । मिङ्गो[9] । अत्रापि[10][11] कृपादित्वादत इल् । वेतस । वेडिसो । अत्र 'टो ड' इत्यत 'ड' इत्यधिकृत्य

---

१ वासओ M २ M has after समृद्धि, प्रसिद्ध । सदृक्ष । मन-स्विनी । प्रमुप्त । प्रतिस्पर्धि । and then प्रतिसिद्धि &c ३ M has प्रतिपिद्ध for प्रवचन । प्ररोह । ४ M has प्रवचन । प्ररोह । इत्यादि for प्रस्तुत &c. up to मनस्विनी । ५ M has अस्यत्वेनुवर्तते before it ६ M has स्वप्न । सिविणो before it ७ M has कृपण । किविणो । ८ M has मृदङ्ग । मिइंगो before it ९ उभयत्र कृत इत्वम् for इ । M १० M drops मिइंगो. ११ M drops अत्रापि कृपा-दित्वादत इल् ।

वेतम इति वोः ॥ १ । ३ । ३२ ॥

अत्र अत इत्वे सति तोर्ड स्यात् । इति ड । उत्तिमो ।[1] स्वम । सिमिणो । स्वप्नादि—स्वप्न । व्यजन । व्यलीक । कृपण । मृदङ्ग । ईषद् । वेतस । दत्तोत्तम । मरिच । इत्यादि । बहुलाधिकारात् णत्वमापन्ने दत्त-शब्दे इत्वम् । अन्यत्र दत्त ॥

पक्काङ्गारललाटे तु ॥ १ । २ । १२ ॥

इलनुवर्तते । एष्वादेरवर्णस्येत्व वा स्यात् । पक्क । पिक्को । अ-ङ्गार । इगालो । इगालो इत्यत्र हरिद्रादिपाठाद्रेफस्य लत्वम । तथ बहुलाधिकारादित्वे कृते सत्येव । इत्वाभावे । अगारो ॥

हरे त्वी ॥ १ । २ । १५ ॥

अत्रादेरत ईत्व वा स्यात् । हीरो ॥

उत्सञ्ञनिगवयविष्वाचि वः ॥ १ । २ । १६ ॥

एषु वकारसम्बन्धिनोवर्णस्योत्व लिट् भवति । गवय । गउओ । अत्र 'प्रायो लुक्—' इति वकारयकारयोर्लोप ॥

स्नावकसास्ने ॥ १ । २ । १८ ॥

अनयोरादेरवर्णस्योत्वं ल्वित् स्यात् । थुवओ । अत्र 'प्रायो लुक्—' इति फलोप । 'स्न' इति स्नस थत्वम् ॥

चण्डखण्डिते णा वा ॥ १ । २ । १९ ॥

'उल्' इत्यनुवर्तते । अनयोर्णकारेण सहादेरवर्णस्योत्व वा स्यात् । चुंडो । चडो । खुडिओ । खडिओ ॥

आसारे [illegible] ॥ १ । २ । २२ ॥

---

१ M has उत्तम । इत्यादि after it २ M drops स्वप्न । सिमिणो । ३ अन for इत्यत्र M ४ M drops लिट् ५ यवकारयो° M ६ M drops 'प्रायो लुक्—' इति ७ णा वा चण्डखण्डिते M ८ उत्वमनु° T ९ एतयो° T, M १० चूडो । चदो । M

'आर्याया र्यः श्वश्र्वामूल्' इत्यत 'ऊॅल्' इत्यनुवर्तते । अत्रादेरवर्णस्य ऊत्व वा स्यात् । ऊसारो । आसारो ॥

**त्तोन्तर्येल् ॥ १ । २ । २३ ॥**

अन्तर्शब्दे तकारसम्बन्धिनोवर्णस्य एत्व लित् स्यात् । अन्तःपुरवर[1] । अन्तेपुरवरो[2] । अन्त सहवास । अन्तेसहवासो । इत्यादि । क्वचिन्न भवति[3] । अन्तर्गत । अन्तग्गओ ॥

**पारावते तु फोः ॥ १ । २ । २४ ॥**

'एॅल्' अनुवर्तते[4] । अत्र द्वितीयस्यास्य[5] एत्व वा स्यात् । पारेवओ । पारावओ ॥

**उत्करवल्लीद्वारमात्रचि ॥ १ । २ । २५ ॥**

'एॅल्' अनुवर्तते[6] । 'तु' इति च । एषु मात्रच्प्रत्यये चादेरवर्णस्य एत्व वा स्यात् । उक्केरो । उक्करो ॥ 'ओदाल्या पङ्क्तौ' इत्यत[7] 'ओत्' इत्यधिकृत्य[8]

**फोः परस्परनमस्कारे ॥ १ । २ । ३० ॥**

परस्परनमस्कारे[9] एतयो फो द्वितीयस्यावर्णस्य[10] ओकारो[11] भवति । परस्परविनय । परोप्फरविणओ[12] । णमोक्कारो[13] ॥

**त्वर्पौ ॥ १ । २ । ३२ ॥**

'ओत्'[14] इत्यनुवर्तते । अर्पयतेर्धातोरादेरवर्णस्य ओत्व[15] वा स्यात् । अर्पित । ओप्पिओ । अप्पिओ ॥

---

१ ऊत्वमनुवर्तते T २ °रत T ३ °उरवरो M ४ सभवति M.
५ एत्वमनु T ६ °यस्यावर्णस्य M, T drops अस्य ७ एत्वमनु T
८ इत्यधिकृत्य M ९ P, My, and R drop परस्परनमस्कारे
१० द्वितीयावर्णस्य P, My, R ११ ओकार स्यात् P, My, R
१२ परोप्पर M १३ T has नमस्कार before it १४ ओत्वमनु° T
१५ ओत्व तु भवति M, ओत्व भवति तु T.

ईर्ध्वल्लाटस्त्यान आतः ॥ १ । २ । ३३ ॥

अनयोरात ईत्त स्यात् । गेण्डीडो । अत्र 'टो ड' इति ट । षत्वोपद्धित्वे ॥

इत्तु सदादौ ॥ १ । २ । ३४ ॥

सदा इत्यादिषु आदेराकारस्य इत्व वा स्यात् । सुप्पिसो । तुप्पासो । उभयत्रापि 'संयोगे' इति ह्रस्व । कूर्पास । नात्र ह्रस्वे कृते 'स्तौ' इत्युत ओत्वम् । बहुलाधिकारादुत्तो लाक्षणिकत्वाद्वा । णिसिअरो । णिसाअरो । निशाकर । सदादि—सदा । कूर्पास । निशाकर । इत्यादि ॥

आचार्ये चो ह्रस्व ॥ १ । २ । ३५ ॥

'आत' इत्यनुवर्तते । 'इत्' इति च । अत्र चकारसबन्धिन आकारस्य ह्रस्वो वा स्यात् । चकारात् पक्षे तस्यैवेत्वश्च । इत्याकारस्य ह्रस्वपक्षे चलोपे । आअर्य । आइर्य । ह्रस्वाभावे । आआर्य इति स्थिते । 'स्याद्भव्यचैत्यचौर्यसमे यात्' इत्यनेन चौर्यसममाचार्यशब्दस्य संयुक्तयकारात्प्रागित्वे । आअरिओ । आइरिओ । आआरिओ ॥

न वाव्ययोत्खातादौ ॥ १ । २ । ३७ ॥

अव्यये उत्खातादौ च आदेराकारस्य विकल्पेन ह्रस्वो भवति । उत्खात । उक्खओ । उक्खाओ । कुँमरो । कुमारो । चँमरो । चामरो । फॅलओ । फलाओ । फलाद । सर्णकार । हॅलिओ । हालिओ । हालिक । इत्यादि । उत्खातादि—उत्खात । कुमार । पलाश । प्राकृत । चामर । फलाद । हालिक । नाराच । तालवृन्त ।

---

१ लित् स्यात् २ सहन्ने M ३ °रात T ४ णिसिआरो । णिसाआरो । M ५ भवति M, T ६ T has इत्वे before आइर्य ७ °शब्दे T, M ८ प्रागित्वम् M ९ M drops आआरिओ १० उक्खाओ । उक्खओ । M ११ कुमारो । कुमरो । M १२ चामरो । चमरो । M १३ फलाद । फलओ । फलाओ । M १४ हालिक । हालिओ । हलिओ । M १५ M has पूवाहा and T संस्थापित for तालवृन्त

तालवृन्त । स्थापित । संस्थापित । प्रस्थापित । इत्यादि । स्थापित-प्रस्थापितसंस्थापितेषु 'स्थष्ठकुकुरौ' इत्यत 'ष्ठ' इत्यधिकृत्य

निरप्पढक्कठाचिट्ठाः ॥ २ । ४ । १२७ ॥

स्थे तिष्ठते निरप्पढक्कठाचिट्ठ इति चत्वार आदेशा भवन्ति । इति ठादेशे । ठविओ । ठाविओ । सठविओ । सठाविओ । पट्ठविओ । पट्ठाविओ । इति सिद्धम् ॥

घञि वा ॥ १ । २ । ३८ ॥

'ह्र' इत्यनुवर्तते । 'आत' इति च । घञि निमित्ते यो वृद्धिरूप आकारस्तस्यादिभूतस्य ह्रस्वो वा स्यात् । पवहो । पवाहो । प्रवाह । पहरो । पहारो । प्रहार ॥ पअरो । पआरो । प्रकार । इत्यादि । क्वचिन्न भवति । राग । राओ । भाग । भाओ ॥

संयोगे ॥ १ । २ । ४० ॥

'ह्रस्व' इत्यनुवर्तते । संयोगे परे पूर्वस्य ह्रस्वो भवति । आम्र । अम्बो । अमात्य । अमच्चो । मुनीन्द्र । मुणिंदो । पूर्व । पुव्वो । नरेन्द्र । णरिन्दो । अधरोष्ठ । अहरुट्ठो । अत्रानुक्तन्यायेन 'एच इग्घ्रस्वादेशे' इति एदोतोरिकारोकारौ । एदोतौ क्वचित् स्वरूपेण ह्रस्व । एक । एक्को । स्तोक । थोक्को । इत्यादि ॥

---

अथैकारस्यादेशा ॥

स्नेदितः ॥ १ । २ । ४१ ॥

---

१ M drops स्थापित and T has प्रस्थापित for स्थापित २ R and T drop संस्थापित ३ T has स्थादिर in place of प्रस्थापित ४ संस्थापित for स्थापित M ५ M has स्थापित for प्रस्थापित ६ संस्थापितशब्देषु M ७ °कुकुरौ M ८ इत्यधिकृत्य M ९ स्था धातो M for स्थ तिष्ठते १० पठाविओ P, R drops पट्ठविओ ११ प्रवाह । पवह । पवाह ॥ M, T १२ पहार । पहरो । प्रहारो । M, T १३ प्रकार । पअरो । पआरो । M १४ अम्मो M T १५ इतीत्वे M

'ईत' इत्यनुवर्तते । अत्र ईत उत्वं लिट् स्यात् । जीर्ण । जुण्णो । क्वचिन्न भवति । जिण्णे भोअणमेत्ते । जीर्णे भोजनमात्रे । अत्र 'उत्करवल्ली—' इत्यादिना मात्रचोरस्य एत्वम् । 'तीर्थे ह्वूर्' इत्यत 'ऊल्' इत्यधिकृत्य

निहीनहीने वा ॥ १ । २ । ४६ ॥

'ईत' इत्यनुवर्तते । अनयोरीत ऊद्वा स्यात् । विहूणो । विहीणो[2] । हूणो । हीणो[3] । 'अनयो' इति । किम् । प्रहीणो ।[4] कीदृश पीयूषेडशेषु 'एल्पीड—'इत्यादिना ईत एत्वम् । 'दृश्यक्सकिनि' इति ऋतो रि । केरिसो । एरिसो । पिऊँप्पेऊसो । प्रियपीयूष । अत्र यलोप । बहुलाधिकारात् पीडनीडयोरेत्वस्य विकल्प । गअपेडो । गअपीडो । नेडो । नीडो । आमेलो । आवेलो । आपीड । अत्र घडिशादिपाठाड्डस्य ल । 'नीपापीडे मो वा' इति पस्य वा म ।

---

अथोकारस्यादेशा ।

स्वदुत उपरिगुरुके ॥ १ । २ । ५८ ॥

कप्रत्ययान्तयोरनयोरादेरुत अत्व तु भवति । गरुओ । गुरुओ । कप्रत्ययान्तपरिग्रहात् केवले न भवति ॥

मुकुलादौ ॥ १ । २ । ५९ ॥

'उत' इत्यनुवर्तते । 'अत्' इति च । मुकुलादिष्वादेरुतोत्व तु भवति । मउलो । मुउलो । मुकुल । मउरो । मुउरो । मुकुर । इत्यादि । मुकुलादि—मुकुल । मुकुर । मुकुट । अगुरु । गुडूची । गुर्वी । युधिष्ठिर । सौकुमार्य । इत्यादि । मकुटशब्द संस्कृतेप्यस्ति ।

---

१ ऊत्व वा स्यात् M  २ M has विहीन after it  ३ M has हीन after it  ४ M has प्रहीन after it  ५ °दृशे M  ६ पिअपेऊसो P  ७ प्रत्ययान्ते गुरुशब्दे उपरिशब्दे चादे° T  ८ एत for° दे M  ९ गुरुओ । गरुओ । M  १० 'तु' इति च after this in M  ११ भवति तु for तु भवति T  १२ मुउलो । मउलो । M

बहुलाधिकारात् क्वचिदात्वमपि । विद्रुत । विद्दाओ ॥ 'ढोदोनुत्साहो-त्सन्नऊच्छसि' इत्यत 'ऊत्' इत्यधिकृत्य 'दुरो रलुकि तु' इत्यत 'तु' इति च ।

सुभगमुसले ॥ १ । २ । ६४ ॥

एतयोरुत ऊत्व वा स्यात् । मूसलो । मुसलो । सूहवो । सुहओ । अत्र 'ऊत्वे सुभगदुर्भगे व' इति कोर्वत्वम् ॥ 'ह्रश्चौत्कुतूहले' इत्यत 'ओत्' इत्यधिकृत्य

स्तौ ॥ १ । २ । ६६ ॥

सयुक्ते परे आदेरुत ओत्वम् । मुद्गर । मोग्गरो । पुद्गर । पोग्गरो । इत्यादि । एव सयुक्ते परे उत ओत्व सर्वत्र सचारणीयम् । नात्र लाक्षणिकस्य उत ओत्वम् । किं त्वलाक्षणिकस्यैव । 'सूक्ष्मेह्वोत' इति ज्ञापकात् । अन्यथा तत्रापि 'सयोगे' इति ह्रस्वे कृते अनेनैवोत्व स्यात् । न च विकल्पार्थ तत् सूत्रम् । तदा 'सूक्ष्मेह्वा' इत्येव ब्रूयान्न तु 'ऊत' इति ॥

ईदुद्व्यूढे ॥ १ । २ । ६९ ॥

'ऊत' इत्यनुवर्तते । उद्व्यूढे ऊत ईत्व स्यात् । उव्वीढो ॥

उत्कण्डूयतिहनूमद्वातूले ॥ १ । २ । ७० ॥

कण्डूयतौ धातौ हनूमद्वातूलयोश्चादेरूत उत्व लित् स्यात् । कण्डूयनपर । कण्डुअणपरो । हनुमान् । हणुमन्तो । अत्र 'मन्तमण—' इत्यादिना मतुपो मन्तादेश । वातूल । वाउलो ॥

ओत्स्थूणातूणमूल्यतूणीरकूर्परगुलचीकुस्माण्डीताम्बूलीषु ॥ १ । २ । ७३ ॥

---

१ T has स्यात् after it २ पोग्गळो M, T ३ आदेरुत for उत My, P ४ भवति M ५ °अरो M, T ६ मन्तादेशो वा स्यात् T ७ M makes two Sûtras—'ओत् स्थूणात् स्थूणे ।' 'वा' इत्यनुवर्तते । 'ऊत' इति च । अनयोरुत ओत्व वा स्यात् । तोणो । तूणो । ९

'सूक्ष्मेढोत' इत्यत 'उत' इत्यनुवर्तते । एषून ओत्व भवति । तित्यानित्यम् । बाहुलकत्वात् स्थूणातूणयोर्विकल्प । तोणो । तूणो । तूण । बहुमोल्लो । बहुमूल्य । तोणीरो । तूणीर । कोप्परो । कूर्पर ॥

---

अथ ऋकारस्यादेशाः ॥

'ऋतोत्' इत्यत 'ऋत' इत्यधिकृत्य

इत्कृपगे ॥ १ । २ । ७६ ॥

कृप इत्यादिषु आदेर्ऋत इत्व लित् स्यात् । टप । किवो । पलोप । तृप । णिवो । तृपण । किविणो । कृपाण । निवाणो । इत्यादि । कृपादि—तृप । नृप । कृपाण । कृशानु । कृति । कृसर । कृच्छ्र । कृपण । कृपि । ऋषि । धृति । वृश्चिक । वृष । वृषि । पृथ्वी । कृत्या । घुसृण । घृणा । ऋद्धि । समृद्धि । गृष्टि । वृद्ध-कवि । स्पृहा । भृमी । हृदय । उत्कृष्ट । गृंष्ट । हृष्ट । तृष्णा । सकृत् । दृष्टि । सृष्टि । सृगाल । व्याहृत । बृंहित । तृंसे । सृष्ट । शृङ्गार । भृङ्ग । मृगु । भृङ्गार । इत्यादि ॥

शृङ्गमृगाङ्कमृत्युदृष्टमसृणेषु वा ॥ १ । २ । ७७ ॥

'इत्' अनुवर्तते । 'ऋत' इति च । एषु ऋत इत्व वा स्यात् ।

---

'कूपरमूल्य कुष्माण्डताम्बूलगुडूचीतूणीरे' । 'उत' इत्यनुवर्तते । ओत्' इति च । एषूत ओत्व भवति । कोप्परो । कूर्पर । बहुमोल्लो । बहुमूल्य । तोणीरो । तूणीर ॥

१ M. and T drop अथ २ ऋत आदेशा । M, T ३ इत्व मधिकृत्य M, T ४ किवो । M ५ अत्र 'पो व' इति वत्वम् । M. ६ M has आकृतिगणोयम् in place of तृप —इत्यादि ७ T has कृपण before it ८ M has कृपण । कृश । कृशानु ९ T has कृश for कृति १० T has वृश्चिक । धृति । ११ दृष्ट । मृष्ट । M १२ M has हृत before भृम

मिअङ्को । मैअङ्को । अत्र 'स्वरस्य बिन्द्वमि' इति ह्रस्वः । दिट्ठो । दट्ठो । इत्यादि ॥

उद्वृषभे वुः ॥ १ । २ । ७९ ॥

अत्र वृ इत्यवयवस्योत्व वा स्यात् । पक्षे अत्वम् । उसहो । वसहो ॥

वृन्दारकनिवृत्तयोः ॥ १ । २ । ८० ॥

'उत्' इत्यनुवर्तते । अनयोर्ऋत उत्व वा स्यात् । पक्षे अत्वम् । वुन्दारओ[3] । णिवुत्तो । णिव्वॆत्तो ।

ऋतुगे ॥ १ । २ । ८१ ॥

उत्वमनुवर्तते । 'ऋत' इति च । ॠत्वादिष्वादेर्ऋत उत्व भवति । उसहो । 'ऋतुऋजुऋण—'इत्यादिना रीत्यादेशे रिसहो । उत्तॆन्तो । इत्यादि । ऋत्वादि—ऋतु । ऋषभ । प्राभृत । प्रभृति । निभृत । सभृत । निवृत । सवृत । निर्वृति । निर्वृत । मधुरि । मावृद् । वृत्तान्त । वृन्द । वृन्दावन । पृथिवी । ऋजु । मृणाल । पृथ्वी । वृद्ध । स्पृष्ट । प्रवृद्ध । परामृष्ट । भ्रातृक । पितृक । जामातृक । मातृक । इत्यादि ॥ 'इदुन्मातु' इत्यत 'इत्' इत्यधिकृत्य

वृष्टिपृथङ्मृदङ्गनमृकरष्टे ॥ १ । २ । ८४ ॥

एषु ऋत इदुतौ भवत । मिअङ्गो । मुअङ्गो । णॆत्तिओ । णत्तुओ । विट्ठो । वुट्ठो[12] ।

दृशेरि सा ॥ १ । २ । ८९ ॥

---

१ M drops मअंको २ उ M ३ M and T have वृन्दारक after it ४ M has निवृत्त after it ५ ऋत्वादेरादे° R ६ वृत्तन्तो M ७ M has परभृत after it ८ इत्यधिकृत्य M, T ९ M has मृदङ्ग । after it १० M and T have विट्ठो । वुट्ठो । णत्तिओ । णत्तुओ । ११ M has नमृक after णत्तुओ १२ After this (i e णत्तुओ) T inserts नमृकशब्दे 'कग—' इत्यादिना पलोप दोपस्य द्वित्वम् । वृष्टशब्दे 'ष्ट' इति ष्टस्य ठत्वम् । 'शेषादेशस्य' इति द्वित्व च ।

दृशेरिते ऋकारस्यागम्या सह अरि इत्यादेशो भवति । दरिओ । दृप्त ॥

केवलस्य रि[1] ॥ १ । २ । ९० ॥

ऋतः केवलस्य व्यञ्जनेनासंयुक्तस्य रि इत्यादेशो भवति । [3]रिच्छो । ऋक्ष । इत्यादि ॥

ऋतुऋणुऋणऋषिऋषभे वा ॥ १ । २ । ९२ ॥

रीत्यनुवर्तते । एषु ऋतो रिच वा स्यात् । ऋणमुक्त । रिणमुघो । उणमुघो । ऋषभ । रिसहो । उसहो ॥

क्लृप्त इलिः ॥ १ । २ । ९३ ॥

क्लृपेरादेरच इलिरित्यादेशः स्यात् । क्लृप्त । किलित्तो ॥

अथ एच आदेशाः ॥

क्षपेटकेसरदेवरसैन्यवेदनास्वेचम्बित् ॥ १ । २ । ९४ ॥

एष्वेचः इत्व वा स्यात् । किसरो । केसरो । दिअरो । देअरो ॥

सैन्धवशनैश्चरे ॥ १ । २ । ९५ ॥

'एच' इत्यनुवर्तते 'ईत्' इति च । अनयोरादेरेच इत्व स्यात् । पृथग्योगान्नित्यम् । सिन्धवो । सणिच्छरो ॥

त्वरमरोगृहमनोहरप्रकोष्ठातोद्यान्योन्ये यश्च क्तो ॥ १।२।९६ ॥

'एच' इत्यनुवर्तते । एष्वेच अत्व तु स्यात्तत्सनियोगेन यथायोग फकारतकारयोर्वत्व चे । मणहरो । मणोहरो । पवट्ठो । पउट्ठो । आवज्जो । आओज्जो । अन्योन्यकलह । अण्णोण्णकलहो । अण्णण्णकलहो ॥

---

[1] ऋत M [2] केवलस्य ऋत T [3] ऋक्ष । रिच्छो । T [4] M drops ऋषभ । [5] °त्यादेशो भवति । M [6] T drops अथ [7] चपेटा M [8] M and T have सव्यञ्जनानां after एष्वेच [9] T has देवर after it. [10] इत्व M, T [11] भवति M, T [12] सिन्धओ M [13] M and T have भवति for च [14] My drops पओट्ठो । [15] अओज्जो M

कौक्षेयक उत् ॥ १ । २ । ९७ ॥

कौक्षेयके आदेरेच उत्व तु[1] भवति । कुच्छेअओ । कोच्छेअओ । पौरादिपाठादउ इत्यपि । कउच्छेअओ । स्पृहादित्वात् क्षस्य छ ॥

शौण्डगे ॥ १ । २ । ९८ ॥

उत्वमनुवर्तते । शौण्डादिष्वादेरेच उत्व तु भवति । पृथक्त्वान्नित्यम् । सुण्डो । शौण्ड. । मुञ्जाअणो । मौञ्जायन । सुवण्णिओ । सौवर्णिक । शौण्डादि[2]—शौण्ड । शौद्धोदनि । मौञ्जायन । सौन्दर्य । सौगन्ध्य । दौवारिक । सौवर्णिक । पौलोमी । इत्यादि ॥ स्तेनशब्दे ।

ऊ स्तेने वा ॥ १ । २ । १०० ॥

अत्र सन्ध्यक्षरस्य ऊत्व वा भवति । 'स्त' इति स्तस्य थत्वम् । थूणो । थेणो ॥

सोच्छ्वासे ॥ १ । २ । १०१ ॥

'ऊ स्तेने वा' इत्यत[4] ऊत्वमनुवर्तते । अत्रैच ऊत्व स्यात्[3] । पृथग्योगान्नित्यम् । सूसासो । अत्र 'दोदोर्नुत्साह—'[7] इत्यनेन शकारसकारयो परयोरुकारस्य दकारेण सह ऊत्वे ऊसास इति स्थिते सन्धौ सति सोसासो[8] । 'ऐच एड्' इत्यत 'ऐच' इत्यधिकृत्य

अइ तु वैरादौ ॥ १ । २ । १०३ ॥

वैरादिष्वादेरैच अइ इत्यादेशो[11] भवति । वैशपायन । वइसपाअणो । पक्षे ऐच एडि । वेसपाअणो । चइत्तो । चेत्तो । चैत्र । इत्यादि । [12]वैरादि—वैर । वैशपायन । वैदेशिक । वैश्रवण । चैत्र । कैलास । वैतालिक । कैरव । दैव । इत्यादि ॥

दैत्यादौ ॥ १ । २ । १०४ ॥

---

१ कौक्षेयपादावादे° M, T २ शौण्डादि T ३ स्यात् R, T ४ इत्यनुवर्तते । ५ उ इत्यनुवर्तते P, My ६ भवति T ७ दोदोर्नुत्साहोत्सन्नऊच्छसि M, T ८ M has शसि before it ९ M and T. have after it एच ऊत्वे सूसासो इति भवति । १० इत्यधिकृत्य M, T ११ °देशो वा भवति । M १२ वैरादि M

'ऐच' इत्यनुवर्तते । 'अइ' इति च । दैत्यादिष्वादेरच अइ इत्येयमादेशो भवति । पृथक्त्वान्नित्यम् । दईचो । दैत्य । वइअब्भो । वैदर्भ । इत्यादि । दैत्यादि—दैत्य । दैन्य । दैवत । कैतव । वैदर्भ । वैदेह । ऐश्वर्य । वैजनन । भैरव । वैतालीय । वैदेश । वैश्वानर । स्वैर । वैशाख । वैशाल । स्वैर्य । चैत्य । इत्यादि । चैत्यविशेषे न भवति । चेत्त ॥

गौरव आत् ॥ १ । २ । १०६ ॥

अत्रैच आत्व भवति । गौरवप्रिय । गारवप्पिओ ॥

पौरगे चाउत् ॥ १ । २ । १०७ ॥

पौरादिष्वैचेैश्चकाराद् गौरवे च अउ इत्यादेशो भवति । गौरवप्रिय । गउरअप्पिओ । पौर । पउरो । कौरव । कउरवो । इत्यादि । पौरादि—पौर । सौर । मौलि । कौरव । गौड । कौल । कौशल । पौरुष । कौक्षेयक । सौध । मौन । गौरव । इत्यादि । स्थविरार्यस्कारयोर्विशेष ॥

एत् साज्झलात्त्रयोदशगेचः ॥ १ । ३ । १ ॥

त्रयोदशादिष्वादेरच साज्झला सस्वरव्यञ्जनेन परेण सहैत्व भवति । थेरो । स्थविरो वृद्धो ब्रह्मा वा । अत्र 'कग—' इति सलोपे थकारस्याकारस्य साच्कवकारस्य च स्थाने एकार । एव सर्वत्र साच्कपरसवर्णस्य पूर्वाचश्च स्थाने त्रयोदशादिष्वेकार कल्पनीय । एक्कारो । अयस्कार । इत्यादि । त्रयोदशादि—त्रयोदश । स्थविर । अयस्कार । विचकिल । त्रयोविंशति । त्रयस्त्रिंशत् । इत्यादि । विचकिलेत्यत्र तैलादिपाठाद् द्वित्वे । वेइल्लो । मुद्धनिअइल्लचसूणपुजा इति

१ M drops 'अइ' इति च । २ इत्यादशो M ३ दइच्चो । M ४ °ष्वादेरेच M, T ५ पऊरो M ६ T has सौर । सऊरो in place of कौरव । कउरवो । ७ P and My drop सौर ८ °यस्कारशब्दयो M, P ९ मझ वा M, बहो T वा T १० °श्वायस्थाने R.

दृश्यते । मुग्धविचकिलप्रसूनपुञ्जा ॥ 'कदले तु' इत्यत 'तु' इत्यधिकृत्य

**कर्णिकारे फोः ॥ १ । ३ । ३ ॥**

अत्र फोर्द्वितीयस्याच परेण साज्झला सह एत्वं तु स्यात् । कण्णेरो । कण्णिआरो ॥

**नवमालिकाबदरनवफलिकापूगफलपूतर ओत् ॥ १ । ३ । ४ ॥**

एष्वादेरच परेण साज्झला सह ओत्वं लिङ्गवति । नवमालिकाधेर । णोमालिओहरो । वदरमिय । बोरप्पिओ । नवफलिकानिर्मित । णोहलिआणिम्मिओ । अत्र 'अखोरखोरच' इत्यधिकृत्य

**फस्य भहौ वा ॥ १ । ३ । ६० ॥**

अखोरखोरच परस्य फकारस्य भकारहकारौ यथासभव व्यवस्थितविभाषया भवत । कचिद् भ । क्वचित् तु ह । क्वचिदुभावपि । रेफेशिफयो फस्य भ एव । मुक्ताफले फस्य ह एव । सफलशेफालिकानवफलिकागुम्फतीत्यादावुभावपि । तेनात्रानेन सूत्रेण फस्य ह । पूगफलमिय । पोहलप्पिओ । पूतर । पोरो । जलजन्तु ॥

**तु मयूरचतुर्थचतुर्द्वारचतुर्दशचतुर्गुणमयूखोलूखलसुकुमारोदूखललवणकुतूहले ॥ १ । ३ । ५ ॥**

'ओत्' इत्यनुवर्तते । मयूरादिष्वादेरच परेण सस्वरव्यञ्जनेन सह ओत्वं वा स्यात् । [1]मोरो । मऊरो । चोत्थो । चउत्थो । चोद्दो । चउद्दो । अत्र 'स्त्यानचतुर्थे—' इत्यादिना थस्य वा ठ । चोद्धारो । चउद्धारो । चोग्गुणो । चउग्गुणो । मोहो । मऊहो । मयूख । खस्य ह । सोमारो । सुउमारो । ओहलो । उऊहलो । उदूखल ।

१ इत्यधिकृत्य M २ °धव ३ णिमा° M ४ °हचो T ५ शफयो M ६ °गुम्फती° M ७ पोफलप्पिओ M ८ M drops जलजन्तु ९ ओत् M १० मऊरो । मोरो । M ११ हलम् T १२ सुउमारो M

कुतूहलपर । कोहल्लपरो । अत्र 'लघुन उपरिगुरोः' इत्यत 'तु' 'उत' इत्यधिकृत्य

इदौत्तु कुतूहले ॥ १ । २ । ६५ ॥

अत्र उत ओत्व तु भवति तत्संनियोगेन ऊतो ह्रस्वश्च । इत्योत्वे ह्रस्वे च । कोऊहल्लपरो । कोउहल्लपरो । अत्र तैलादित्वाद् द्वित्वम् ॥

निषण्ण उमः ॥ १ । ३ । ६ ॥

'तु मयूर—' इत्यत 'तु' इत्यनुवर्तते । आदित्वादेरच परे साज्झला सहितस्य उम इत्यादेशः स्यात् । णुमण्णो । णिसण्णो ॥

अस्तोरस्योरचः ॥ १ । ३ । ७ ॥

अधिकारोऽयम् । 'गोत्ववशस्त्वाम्ले वा' इति यावत् । इत ऊर्ध्वं यदनुक्रमिष्यते तदस्तोरसंयुक्तस्यास्तोरनादौ वर्तमानस्याचः परस्य भवतीति वेदितव्यम् ।

---

## अथ कवर्गस्यादेशाः ॥

खोऽपुष्पकुब्जकर्परकीले को. ॥ १ । ३ । १२ ॥

अपुष्पवाचिनि कुब्जशब्दे कर्परकीलयोश्च को कवर्गस्य खकारो भवति । बवयोरभेदाद् 'लवरामधश्च' इति वलोपे । खुज्जो । पुष्पे तु कुज्जो । खप्परो । खिल्ओ । अत्र 'स्वार्थे तु कश्च' इति कः ॥

छागशृङ्खलकिराते लकचाः ॥ १ । ३ । १३ ॥

'को' इत्यनुवर्तते । एषु कवर्गस्य यथाक्रमं लकच इत्यादेशा भवन्ति । छाग । छालो । किरात । चिलाओ । पुलिन्दपर्याय एव । कामरूपिणि तु नेष्यते । णमिमो हरकिराअ । चिलाओ । इत्यत्र हरिद्रादिपाठाद्रेफस्य लत्वम् ॥

---

१ इत्यधिकृत्य R, M २ कोउहल्लपरो । M ३ M drops कोउहल्लपरो । ४ वा स्यात् । M, T ५ M drops यत् ६ M and T drop अथ ७ °रभेदन्यायेन M ८ खप्परो for खिल्ओ ९ कस्तत्र for यथोक्त क M १० लकचम् M ११ इत्येते आदेशा भवन्ति M

**वैकादौ गः ॥ १ । ३ । १४ ॥**

एकादौ कोर्गे[1] स्याद्वा । एक । ऍगो[2] । एकादि—एक । आकर्ष । लोक । अमुक । तीर्थकर । उद्योतकर । श्रावक । असुकर । आकर । इत्यादि ॥

**खोः कन्दुकमरकतमदकले ॥ १ । ३ । १५ ॥**

'गे'[3] इत्यनुवर्तते । 'को' इति च । एषु खो कवर्गस्य गे[4] स्यात् । पृथक्त्वान्नित्यम् । कन्दुकपर । गदुअपरो । मरकतमय. । मरगअमओ । मदकल । मअगलो ॥

**पुन्नागभागिनीचन्द्रिकासु मः ॥ १ । ३ ॥ १६ ॥**[5]

'को' इत्यनुवर्तते । एषु कोर्मो भवति । पुंनाग[6] । पुण्णामो ।

**शीकरे तु महौ ॥ १ । ३ । १७ ॥**

अत्र को भकारहकारौ वा भवत । शीकरो[7] । सीभरो । सीहरो । सीअरो ।

**ऊत्वे सुभगदुर्भगे वः ॥ १ । ३ । १८ ॥**

अनयोरुत ऊत्वे सति कोर्वकारो भवति । सूहवो[8] । दूहवो । अत्र भस्य ह । 'दुरोरल्लुकि तु' 'सुभगमुसले' इत्याभ्यामुत ऊत्वम् । 'ऊत्वे' इति किम् । सुहओ । दुहओ । अत्र

**दुरोरल्लुकि तु ॥ १ । २ । ६३ ॥**

'दोदोनुत्साहोत्सन्नऊच्छसि' इत्यत 'ऊत्' इत्यनुवर्तते । दुरित्युपसर्गस्य रेफलोपे आदेरुत ऊद्वा स्यात् । इति रेफलोपे विकल्पेन ऊत्वविधानाद् दुहओ इत्यत्र ऊत्वाभाव । 'सुभगमुसले' इत्यूत्वस्य वैकल्पिकत्वात् पक्षे । सुहओ ।

---

१ गों भवति । M  २ एग्गो । M  ३ M has 'वेकादौ ग' इत्यत before it  ४ गो भवति । M  ५ °भोगिना° M  ६ M drops पुनाग ।  ७ M has भीमरो । नीहरो । पक्षे । नीअरो in place of शीकरो । सीभरो । सीहरो । सीअरो ।  ८ दूहवो । सूहवो । M

निकषस्फटिकचिकुरे हः ॥ १ । ३ । १९ ॥

एषु कवर्गस्य हत्वं भवति । णिहसो । फलिहो । अत्र 'प्पस्पो' इति फत्वम् । 'स्फटिके' इत्यनेन टस्य लत्वम् । चिहुरो । 'चिहुर' संस्कृतेपि' इति भृङ्गाचार्यः ।

---

अथ चवर्गादेशाः ॥

चोः खचितपिशाचयोः सल्लौ ॥ १ । ३ । २२ ॥

'ढ पृथकि तु' इत्यत्र 'तु' इत्यनुवर्तते । अनयोश्चोश्चवर्गस्य सकारल्लिरक्तलकारौ यथासंख्यं तु भवतः । खसिओ । पक्षे । खइओ । पिसल्लो । अत्र 'संयोगे' इति ह्रस्वः । पिसाओ ।

झो जटिले ॥ १ । ३ । २३ ॥

'तु' इत्यनुवर्तते । अत्र चोर्झत्वं वा स्यात् । झडिलो । जडिलो । अत्र 'टो ड' इति टस्य डत्वम् ।

---

अथ टवर्गादेशाः ॥

टोर्वडिशादौ लः ॥ १ । ३ । २४ ॥

'तु' इत्यनुवर्तते । बडिशादौ टोष्टवर्गस्य लत्वं तु स्यात् । गुड । गुलो । गुडो । वडिशादि—बडिश । गुड । नेड । चपेट । आपीड । नाडी । वाटी । वेणु । दाडिमं । इत्यादि ।

स्फटिके ॥ १ । ३ । २५ ॥

अत्र टोर्लत्वं स्यात् । पृथक्त्वान्नित्यम् । फलिहो ॥

ढः कैटभशकटसटे ॥ १ । ३ । २७ ॥

---

१ चिहुर इति संस्कृतेपि M २ भृङ्ग्याचार्यं M ३ M and T drop अथ ४ चवर्गस्यादेशा My, P ५ हखपक्षे M, R ६ पिसवो। M ७ M drops अथ ८ टवर्गस्यादेशा P, My ९ M drops नेड १० M drops वाटी, R has वेणु। वाटी। ११ M has हटी। and T पालयति after दाडिम।

'टो' इत्यनुवर्तते । एषु टवर्गस्य ढो भवति । केढवो । अत्र

**वो भस्य कैटभे ॥ १ । ३ । ६४ ॥**

अत्र भकारस्य व स्यात् । इति भस्य व । सअढो । शकट ॥

**ठः ॥ १ । ३ । २८ ॥**

'ड' इत्यनुवर्तते । असंयुक्तस्यानादौ वर्तमानस्याच परस्य ठस्य ढ स्यात् । मठ । मढो । कमठ । कमढो । कुठार । कुढारो । अस्तोरित्येव । चिट्ठइ । अखोरित्येव । ठाइ । अच इत्यैव । करो ।

**पिठरे हस्तु रश्च ढः ॥ १ । ३ । २९ ॥**

'ठ' इत्यनुवर्तते । अत्र ठस्य हस्व तु स्यात् तत्सन्नियोगेन रश्च । रेफस्य ड । पिहडो । पक्षे । पिढरो अत्र 'ठ' इति ठस्य ढत्वम् ।

**लल्डोनुड्डगे ॥ १ । ३ । ३० ॥**

अखोरखोरच परस्य डस्य लकारो भवति अनुड्डगे उत्वादिगण वर्जयित्वा । लित्वान्नित्यम् । गरुड । गरुलो । अत्र हरिद्रादिपाठाद्रेफस्य लत्वम् । वडवानल । वलआणलो । अस्तोरित्येव । कुड्यम् । कुड्ड । अखोरित्येव । डमरुओ । डमरुग । अच इत्येव । तोंडो । 'अनुड्डगे' इति किम् । णिविडो । उडुगौडनिविडनाडीपीडितनीडेत्यादि ॥

**टो डः ॥ १ । ३ । ३१ ॥**

अस्तोरखोरच परस्य टस्य ड स्यात् । घट । घडो । एतत्तिङन्तेपि समानम् । 'अस्तो' इति किम् । खट्वग । खट्टाग । 'अखो' इति किम् । टको । 'अच' इति किम् । घटा । क्वचिन्न भवति । अटैति । अटइ ॥

---

## अथ तवर्गादेशा ॥

**वेतस इति तोः ॥ १ । ३ । ३२ ॥**

---

१ M drops ठस्य । २ My drops डस्य ३ अटइ । अटति । M
४ M, R, and T drop अथ ५ तवर्गस्यादेश Mr, P

'टो ड' इत्यत 'ड' इत्यनुवर्तते। अत्रादेरवर्णस्य समादित्वादित्वे सति तोस्तवर्गस्य उत्व भवति। वेडिसो। 'इति' इति किम्। चेअसो।

प्रतिगेप्रतीपगे ॥ १ । ३ । ३३ ॥

'तो' इत्यनुवर्तते। प्रत्यादिषु तवर्गस्य डो भवति। अप्रतीपगे। प्रतीपादीन् वर्जयित्वा। प्रतिपन्न। पडिवण्णो। प्रतिभास। पडिहासो। इत्यादि। प्रत्यादि—प्रतिपन्न। प्रतिभास। प्रतिहार। प्रतिस्पर्धि। प्रतिनिवृत्त। प्रतिकरोति। प्रतिपद्। प्रतिश्रुत्। प्रतिमा। प्रभृति। मृत। भिन्दिपाल। पताका। प्राभृतक। बिभीतक। व्यापृत। कन्दलिका। हरीतकी। इत्यादि। 'अप्रतीपगे' इति किम्। प्रतीपम्। पईवम्। प्रतीपादि—प्रतीप। प्रतिज्ञा। प्रतिसमय। प्रतिष्ठा। प्रतिष्ठान। इत्यादि ॥

दम्भदरदर्भगर्दभदष्टदशनदग्धदाहदोहददोलादण्डकदने तु ॥ १ । २ । ३५ ॥

'ट' इत्यनुवर्तते। 'तो' इति च। दम्भादिषु तवर्गस्य डो वा स्यात्। टम्भो। डरो। टब्भो। टट्ठो। पक्षे। दभो। दरो। दब्भो। दट्ठो। दरशब्दोऽत्र भयार्थ एव ग्राह्य। अन्यत्र। दरदलिआ। दरदलिता। दोहदे दम्भादिसाहचर्यादावस्यैव। डोहओ ॥

तुच्छे चच्छौ ॥ १ । ३ । ३६ ॥

अत्र तवर्गस्य चकारच्छकारौ क्रमाद्भवत। तुच्छ। चुच्छो। छुच्छो ॥

टल् त्रसरहन्ततूवरतगरे ॥ १ । ३ । ३७ ॥

एषु तवर्गस्य टकारो भवति। लित्वान्नित्यम्। टसरो। टूवरो।

---

१ इत्यनुवर्तते M इत्यतो इत्यमनुवर्तते T २ P, My, and M drop प्रतिपद् ३ भिन्दिवाल। Mr, P, M ४ R and T have after this प्रपाद। प्रतिपदम् पइपदम्। ५ प्रतिज्ञा। सप्रति। R, T ६ M and R drop अत्र ७ भयार्थो इतो T, R ८ एवात्र ग्राह्य। M ९ R drops ग्राह्य।

तूवर शृङ्गरहितोनड्वान् श्मश्रुरहितो वो । टगरो औषधविशेषो वृक्ष-विशेषो वा ॥

हः कातरककुदवितस्तिमातुलुङ्गेषु ॥ १ । ३ । ३८ ॥

'तो' इत्यनुवर्तते । एषु तवर्गस्य हत्व भवति । काहरो । कहो । मातुलुङ्गप्रिय । माहुलुगप्पिओ ॥

हैं वसतिभरते ॥ १ । ३ । ३९ ॥

'ह' इत्यनुवर्तते । अनयोस्तवर्गस्य हैकारो वा स्यात् । भरहो । भरओ ॥

लः पलितनितम्बकदम्बे ॥ १ । ३ । ४० ॥

'तु' इत्यनुवर्तते । एषु तवर्गस्य लो वा स्यात् । पलितकेश । पलिलकेसो । [6]नितम्ब । निलबो । कदम्ब । कलबो । पक्षे । पलिअकेसो । इत्यादि ॥

दोहदप्रदीपशातवाहनातसीम् ॥ १ । ३ । ४१ ॥

'ल' इत्यनुवर्तते । दोहदे मपूर्वे दीप्यतौ च शातवाहनशब्दे अतसीशब्दे च तवर्गस्य लत्व भवति । पृथक्त्वान्नित्यम् । दोहलो । पलीवो । प्रदीप । सालाहणो । शातवाहन । अळसिप्पसूणवण्णो । अतसीप्रसूनवर्ण ॥

रत् सप्तत्यादौ ॥ १ । ३ । ४२ ॥

तवर्गस्य रत्व भवति । लित्वान्नित्यम् । इति सप्तत्यादिगणपठितगद्गदशब्दे तवर्गस्य र । गग्गरो । सप्तत्यादि—सप्तति । सप्तदश । एकादश । द्वादश । त्रयोदश । पञ्चदश । अष्टादश । गद्गद इत्यादि ॥ 'कदर्थिते खोर्व' इत्यत 'व' इत्यधिकृत्य

---

१ शकरहित । P, My, M  २ घा श्वषभ M, पुल्यो वा R, T  ३ R drops तु  ४ R has तु after it  ५ हत्व R  ६ M has निम्ब । तिंबो for नितम्ब । निम्बो ।  ७ °शब्दे च M  ८ M has गद्गद । before it  ९ इत्यधिकृत्य M

पीते ले वा ॥ १ । ३ । ४५ ॥

पीने स्वार्थिके लकारे सति तोऽकारो वा स्यात् । पीवलो । पीअलो[1] । 'ले' इति किम् । पीओ । अत्र 'स्वार्थे तु कश्च' इत्यधिकृत्य 'लो वा विद्युत्पीतयो ' इत्यनेन स्वार्थे वा लः ॥

ढः पृथिव्यौषधनिशीथे ॥ १ । ३ । ४७ ॥

'थो' इत्यनुवर्तते । एषु तवर्गस्य ढत्व वा भवति । औषधगुण । ओसढगुणो । पक्षे । ओसहगुणो । अत्र 'खघथधभाम्' इति हत्वम् । णिसीढो । णिसीहो । निशीथ ॥

र्णो दिना रुदिते ॥ १ । ३ । ४९ ॥

अत्र दिना दीत्यवयवेन सह णत्व रिर्द्वैवति[3] । रित्वाद्वित्वम् । रुदितकर । रुण्णअरो । 'णो वातिमुक्तके' इत्यत 'णो वा' इत्यधिकृत्य[4]

गर्भिते ॥ १ । ३ । ५१ ॥

अत्र तवर्गस्य णत्व भवति । गब्भिणो । गब्भिओ ॥

नः ॥ १ । ३ । ५२ ॥

'ण ' इत्यनुवर्तते । अस्तोरस्तोरच परस्य नकारस्य णकारो भवति । मानव । माणवो[6] । ईशान । ईसाणो[7] । इत्यादि ॥

आदेस्तु ॥ १ । ३ । ५३ ॥

'न ' इत्यनुवर्तते । आदेर्नकारस्य णो वा स्यात् । नर । णरो । नरो । नत । णओ । नओ । इत्यादि । अस्तोरित्येन । न्याय । नाओ ॥

नापिते ह्ः ॥ १ । ३ । ५४ ॥

---

1 M. has पीत after पीअलो । 2 R and T have 'पीते लो ha..पत befor.. 'वा' इत्यनुवर्तते । 3 रिर्भवति । M 4 इत्यधिकृत्य R, ' .. ., My 6 माणवो । मानव । M 7 ईसाणो । ..

'ण' इत्यनुवर्तते । 'न' इति च । अत्र नकारस्य णकारहकारौ वा भवत । हाविओ । णाविओ । नाविओ ॥

---

## अथ पवर्गादेशाः ॥

**पो वः ॥ १ । ३ । ५५ ॥**

असयुक्तस्यानादौ वर्तमानस्याच परस्य पकारस्य प्रायो वः स्यात् । शाप । सावो । इत्यादि । अस्तोरित्येव । विप्र । विप्पो । अस्तोरित्येव । पढइ । पठति । अच इत्येव । कम्पो । प्राय इत्येव । कपि । कई । रिपु । रिऊ । एतेन प्रायो लोपवकारयो पकारस्य युगपत् प्राप्तयोर्यत्र श्रुतिसुखमुत्पद्यते स तत्र विधेय ॥

**फः पाटिपरिघपरिखापरुपपनसपारिभद्रेषु ॥ १ । ३ । ५६ ॥**

'प' इत्यनुवर्तते । णिजन्ते पटिधातौ परिघादिषु च पस्य फत्व भवति । परिघ । फलिहो । अत्र घस्य ह । हरिद्रादित्वाद्रस्य लत्वम् । पनस । फणसो । फणस सस्कृतेपि । परुष । फरुसो । पारिभद्र । फालिहद्दो । भस्य ह । हरिद्रादित्वाद्रेफस्य लत्वम् ॥

**प्रभूते वः ॥ १ । ३ । ५९ ॥**

'प' इत्यनुवर्तते । अत्र पकारस्य वकार स्यात् । बहुत्तो । तैलादित्वाद् द्वित्वम् ॥

**नीपापीडे मो वा ॥ १ । ३ । ५७ ॥**

नीपे आपीडे च पस्य मो वा स्यात् । णीमो । पक्षे । नीवो ।

---

१ M drops 'न' इति च २ हकारौ वा स्यात् । R, T ३ स्यात् । M ४ हाविओ । R ५ M and R drop अथ ६ पवर्गस्यादेशा । My, P, पस्यादेशा । R ७ वकार R ८ R has कम्प before कम्पो ९ R has इत्यादि after रिऊ । १० R has पकारस्य for एतेन ११ पनसपरुष M १२ R has परुष । फरुसो before पनस । १३ पणसो M, R

आमेलो । पंक्षे । आवेग्गो । अत्र 'धन्यूपीड—' इत्यादिना ईकारस्य एत्वम् ॥

**फस्य महौ वा ॥ १ । ३ । ६० ॥**

अस्तोरन्तोरच परस्य फकारस्य भकारहकारौ यथासंख्य व्यवस्थित विभाषया भवत । क्वचिद्भ । रेफ । रेभो । क्वचिद्ध । मुक्ताफलम् । मोत्ताहळं । कैचिदुभावपि । सफलम् । सभळं । सहळं । इत्यादि । अस्तोरित्येव । गुल्फम् । गुम्फो । अस्तोरित्येव । फणी । अंच इत्येव । गुफति । गुफइ । माय इत्येव । कसणफणी ॥

**यो वः ॥ १ । ३ । ६१ ॥**

असयुक्तस्यानादौ वर्तमानस्याच परस्य बस्य वो भवति । शबल । सवलो । इत्यादि ॥

**ङन्यौ कबन्धे ॥ १ । ३ । ६२ ॥**

अत्र बकारस्य वकारयकारौ डितौ भवत । ङित्वात् सानुनासिक उचार । कबन्धो । कयन्धो ॥ 'लभिमयौ म' इत्यत 'म' इत्यभिवृत्य

**तु डो विषमे ॥ १ । ३ । ६७ ॥**

अत्र मस्य डो वा स्यात् । निसढो । निसमो ॥

**यो जतीयानीयोत्तरीयकृत्येषु ॥ १ । ३ । ६८ ॥**

'तु' इत्यनुवर्तते । तीये अनीये च प्रत्यये उत्तरीयशब्दे कृद्विहितप्रत्यये च यकारस्य जकारो वा स्यात् । रिरनाद् द्वित्वम् । तृतीय । तइज्जो । पक्षे । तेइओ । अत्र 'ऋतोत्' इत्यत्वम् । गमीरादिपाठादी-

---

१ M drops पक्षे  २ एत्व भवति । M  ३ P and My drop the portion from क्वचिद्द to इत्यादि ।  ४ पुप्पम् । पुप्पम् M for गुल्म । गुम्मो ।  ५ भोरित्येव । गुफइ । for अच इत्येव । गुफति । गुफइ । M  ६ M has कृष्णफणी after कसणफणी ।  ७ वस्स M  ८ °नासिकोचार । M  ९ इत्यधिकृत्य M.  १० तइवो M

कारस इत्व तलोपश्च । अनीये । करणीय । करणिज्जो । करणीओ[1] ।
उत्तरीयपट । उत्तरिज्जपडो । उत्तरीअवडो[2] । कृत्ये । मेय । मेज्जो ।
मेओ । इत्यादि ॥

इन्मयटि ॥ १ । ३ । ६९ ॥

'य' इत्यनुवर्तते । 'तु' इति च । मयट्प्रत्यये यकारस्य इकारो वा स्यात् । विषमय । विसमइओ । विसमओ[3] । इत्यादि ॥

कतिपये वहशौ ॥ १ । ३ । ७२ ॥

'य' इत्यनुवर्तते । अत्र यस्य वत्वहत्वे मतत । हत्वे शित्वात् पूर्वस्य दीर्घ । कइवओ । कइवाहो ॥

अर्थपरे तो युष्मदि ॥ १ । ३ । ७३ ॥

'य' इत्यनुवर्तते । अर्थपरे युष्मच्छब्दे यकारस्य तकार स्यात्[4] । तुम्हकेरो । 'अर्थपरे' इति किम् । जुम्हअह्मप्पअरण[5] । युष्मदस्मत्प्रकरणम् ॥

आदेर्जः ॥ १ । ३ । ७४ ॥

'य' इत्यनुवर्तते । आदेर्यस्य ज स्यात् । यम । जमो । इत्यादि । 'आदे' इति किम् । अवयवो । बहुलाधिकारात् सोपसर्गस्यानादेरपि । सयोग[6] । सजोओ । सयम । सजमो[7] । कचिन्न भवति । प्रयोग । पओओ ॥ 'भ्यौ बृहस्पतौ तु वहो' इत्यत 'तु' इत्यनुवर्तते । 'रो डा पर्याणे' इत्यत 'र' इति च ।

लो जठरवठरनिष्ठुरे ॥ १ । ३ । ७७ ॥

जठरादौ रस्य ल्त्व वा स्यात् । जठरानल । जढलाणलो । जढराणलो[8] । वढलो । वढरो[9] । अत्र 'ठ' इति ठस्य ढत्वम् । णिट्ठुलो ।

१ करणीयो M २ उत्तरीअपडो M ३ M drops विसमओ । ४ M and T have युष्मदीय before it ५ जुह्माअह्मापअरण । M ६ सजोओ । सयोग । M, R, T ७ सजमो । सयम । M, R, T ८ जढरानलो M ९ पढलो । पढरो । M

निठ्ठुरो । अत्र 'कग—' इति पलोपे शेषस्य द्वित्वम् । भसलशब्दो भ्रमरपर्याय सस्कृत ईव ॥

हरिद्रादौ ॥ १ । ३ । ७८ ॥

'र' इत्यनुवर्तते । 'ल' इति च । हरिद्रादौ रेफस्य लत्व भवति । पृथक्त्वान्नित्यम् । चरण । चलणो । इत्यादि । हरिद्रादि—हरिद्रा । अङ्गार । चरण । युधिष्ठिर । सुकुमार । शिथिर । सत्कार । मुखर । वरुण । निरात । रुग्ण । अपद्वार । करुण । दरिद्र । परिघ । परिखा । मत्सर । सवत्सर । पारिभद्र । दारिद्र्य । कातर । इत्यादि ॥

किरिबेरे[1] डः ॥ १ । ३ । ७९ ॥

किरिशब्दे बेरशब्दे च रस्य ड स्यात्[2] । बेडो[3] । बेर[4] । करभो मण्डूको दुन्दुभिर्वा ॥

खोः करवीरे णः ॥ १ । ३ । ८० ॥

'र' इत्यनुवर्तते । अत्र खोरादे रेफस्य णत्व स्यात् । कणवीरो ॥

लोहललाङ्गललाङ्गूले वा ॥ १ । ३ । ८२ ॥

अस्तोरखोरच इति निवृत्तम् । 'लो ल्लाटे च' इत्यत 'ल' इत्यनुवर्तते । पूर्वसूत्रात् 'ण' इति च । लोहलादिष्वादेर्लकारस्य णो वा स्यात् । लगलहत्थो । णोहलो । लोहलो । शैब्दविशेष[5] । [6]णगलहत्थो । लागलहस्त । अत्र 'सरस विद्वमि' इति ह्रस्व । 'सयोगे' इति वा । दीर्घलाङ्गूल । दिर्घणगूले[7] । दिर्घलगूलो[8] ॥

घो मः शबरे ॥ १ । ३ । ८४ ॥

अत्र घस्य म[9] स्यात् । शैनल । समरो[10] ॥ 'नीवीस्वप्ने वा' इत्यत 'वा' इत्यधिकृत्य

---

१ मदेव R, T २ भेरे M ३ M has 'र' इत्यनुवर्तते before it ४ भेर । भेडो । M ५ शफरविशेष R, T ६ लाङ्गलहस्त । णगल्लहत्सो । लगल्लहत्थो । M ७ दिग्घणगूलो । M ८ M drops दिग्घलगूलो । ९ M, R and T drop शबल । १० सम्मरो । M

**हस घो निन्दोः ॥ १ । ३ । ८६ ॥**

बिन्दो परस्य हस घो वा स्यात् । संहार । सघारो । संहारो । सिंह । सिंघो । अस्य विंशत्यादिपाठाद्विन्दो श्लोपलि शित्वात् पूर्वस्य दीर्घे सीहो इत्यपि । क्वचिदबिन्दोरपि । दाह । दाघो ॥ 'शो सल्' इत्यत 'शो' इत्यधिकृत्य

**प्रत्यूषदिवसदशपापाणे तु हः ॥ १ । ३ । ८८ ॥**

एषु शो शषसाना हकारो वा स्यात् । प्रत्यूष । पंचूहो । पचूसो । अत्र 'त्योचैत्ये' इति त्यस्य च । दिअहो । दिअसो । पाहाणो । पासाणो ॥

**छल् पट्छमीसुधाशावसप्तपर्णे ॥ १ । ३ । ९० ॥**

'शो' इत्यनुवर्तते । एषु शोरछत्व लित् स्यात् । षण्मुख । छम्मुहो । षट्पद । छप्पओ । शाव । छावो । सप्तपर्णे । 'हे दक्षिणेस्' इत्यत 'अस' इत्यधिकृत्य 'समादाविल्' इत्यत 'इल्' इति च

**सप्तपर्णे फोः ॥ १ । २ । १३ ॥**

अत्र द्वितीयस्यावर्णस्येत्व लिर्द्भवति । छत्तिवण्णो । सुधाकर । छुहाअरो ॥ पादपीठादिषु विशेषा कथ्यन्ते । 'सिरोया वा' इत्यत 'वा' इत्यधिकृत्य

**लुक् पादपीठपादपतनदुर्गादेव्युदुम्बरेचोन्तर्दः ॥ १।३।९२ ॥**

पादपीठादिष्वन्तर्वर्तमानस्य 'दे दकारस्य अचा सहितस्य लुग्वा स्यात् । नतपादपीठ । णअपावीढो । णअपाअवीढो । अत्र 'ठ' इति

---

१ P and My have संघारो । सहारो । संहार । २ R drops संहारो ३ पूर्वस्याचो M ४ पच्छूहो । M ५ M drops पचूसो ६ M has पच्छूसो before दिअहो । ७ इत्यनुवतते R ८ ल्लित् स्यात् R ९ सीरायां M १० इत्यधिकृत्य M, R ११ चादोन्त M १२ R and T drop द १३ M drops णअपाअवीढो ।

ठस्य ढत्वम् । कृ[1]तरामपादपतन । फे[2]अरामपावडणो । फे[3]अरामपाअव-डणो । अत्र प्रत्यादित्वात् तस्य ड । दुर्गादेवीरमण । दुग्गाईरमणो । दुग्गादेईरमणो । उदुम्बर । उंबरो । उउंबरो । 'अन्तर्' इति किम् । दुर्गा[4]देव्यामेंदो मा भूत् ॥

व्याकरणप्राकारागते कगोः ॥ १ । ३ । ९३ ॥

'लुक्' अनुवर्तते । 'अचा' इति च । व्याकरणादिषु ककारगकार-योरचा सह लुग्वा स्यात् । व्याकरणपाठ । वारणपाढो । वाअरण-पाढो । प्राकार । पारो । पो[5]आरो । [6]आओ । आअओ । आगत ॥

एवमेवदेवकुलप्रावारयावज्जीवितावटावर्तमानतावति वः ॥ १ । ३ । ९४ ॥

एवमेवादिष्वन्तर्वर्तमानस्य वं[7]कारस्य अचा सह लुग्वा स्यात् । देव-कुलनाथ । दे[8]उलणाहो । दे[9]वउलणाहो । पारो । पा[10]वारो । प्रा[11]वार । [12]जीअणाहो । जीविअणाहो । जीवितनाथ । अडो । अवडो । अवट । अ[13]त्र 'टो ड' इति टस्य डत्वम् । अत्तमाणो । आवत्तमाणो । आवर्त-मान । 'अन्तर्' इति किम् । एवमेवेत्यत्रान्त्यस्य मा भूत् ॥

ज्योर्दनुजवधराजकुलभोजनकालायसकिसलयहृदयेषु ॥ १ । ३ । ९५ ॥

द[14]नुजवधादिषु ज्योर्जकारयकारयोरचा सह लुग्वा स्यात् । दे[15]णुवहो । दणुअवहो । दनुजवध । रा[16]उलप्पसूओ । राअउलप्पसूओ । राजकुल-प्रसूत । भोणप्पिओ । भो[17]अणप्पिओ । भोजनप्रिय । इत्यादि ॥

---

१ कृतपादपतन । R २ कअपावडणो R ३ फअपाअवडणो R ४ °मादेमा My, P ५ पाअरो M ६ आगत । आगओ । आओ । M ७ वस्य R ८ देउल्णहो । M ९ M drops देवउल्णाहो । १० पाअरो । M ११ M. drops प्रावार । १२ जीवितनाथ । जीअणाहो । जीवि अणाहो । १३ M, My and P drop अत्र टो ड' इति टस्य डत्वम् । १४ दनुजादिषु R १५ दनुजवध । दणुवहो । M १६ राजकुलप्रसूत । राउल्प्पसूदो । राअउल्प्पसूदो । M १७ M drops भोअणप्पिओ ।

**अपतौ घरो गृहस्य ॥ १ । ३ । ९६ ॥**

गृहशब्दस्य अपतौ पतिशब्द परो न भवति चेद् घर इत्यादेशो भवति । घरो । राअघरो । 'अपतौ' इति किम् । गहवई ॥ सरशब्दे

**सरकद्वोरीसरकारौ ॥ १ । ३ । १०० ॥**

अनयोर्यथासख्य ईसरकार इत्यादेशौ भवत । ईसरो । पक्षे सरो । एकादश । द्वादश । अष्टादश । सप्तदश । अत्र सर्वत्र सप्तत्यादिपाठाद् दस्य रत्वम् । 'प्रत्यूष' इत्यादिना शोर्हत्वम् । एआरहो । बारहो । अत्र 'कग—' इत्यादिना दस्य लुक् । अट्ठारहो । अत्र 'ष्ट' इति ष्टस्य ठत्वम् । सत्तरहो । अत्र 'कग—' इति पस्य लुक् । पञ्चदश । पण्णरहो । अत्र 'पञ्चदश—' इत्यादिना स्तोर्ण । त्रयोदश । तेरहो । अत्र 'एत्साज्झला—' इत्येत्वम् । चतुर्दश । चोद्दहो । चउद्दहो । अत्र 'तु मयूर—' इत्यादिना आदेरच परेण साज्झला सह वा ओत्वम् । एतेषा सख्यावाचित्वेप्युक्ता आदेशा समा । विशेषस्तु नकारान्तत्वादात्मशब्दवत् प्रक्रिया । पूरणप्रत्ययान्तास्तु रामशब्दवत् ॥

इत्यकारान्ता ॥

---

अथ आकारान्त पुलिङ्ग सोमपाशब्द ।

सोमपा सु इति स्थिते 'ह्रस्वलीदूत' इत्यत 'ह्रस्वल' इत्यधिकृत्य

**क्विपः ॥ २ । २ । ४७ ॥**

[12]क्विप्प्रत्ययान्ताना ह्रस्व स्यात् । इति क्विप्प्रत्ययान्ताना ह्रस्वविधानेपि प्राकृतप्रतिपादकशास्त्रान्तरे क्विबादिप्रत्ययान्तानामित्यादि

---

१ M has सत्तदश । अट्ठादश । २ एआरहो । M ३ My, M, and P drop the portion from अत्र to दस्य लुक् ४ The portion from अत्र to ठत्वम् is dropped in My, P and M ५ M, My, P drop the portion from अत्र to लुक् ६ चउद्दहो is omitted in M and My ७ इत्यादेरच M ८ ओकार । M ९ पूरणप्रत्ययान्ता M, पूरणप्रत्ययान्तो R, T १० R drops शब्द ११ M and T drop अथ १२ क्विप्प्रत्ययान्तस्य P, My

ग्रहणदर्शनाद्विच्प्रत्ययान्तसोमपाशब्दस्यापि ह्रस्व । यद्वा 'क्विप' इति सूत्रे क्विब्ग्रहण विजादीनामप्युपलक्षकम् । न च सूत्रे उपलक्षकत्व-मदृष्टचरमिति वाच्यम् । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमित्यत्र साधर्म्यग्रहण वैधर्म्यस्याप्युपलक्षणमिति सर्वसमतिपन्नत्वात् । तन्न्या-येनात्राप्युपलक्षितविच्प्रत्ययान्तस्य सोमपाशब्दस्यापि ह्रस्व । तथा च सोमप सु इति स्थिते 'प्रायो लुक्—' इति पलोपे प्राप्ते 'नात्य' इति प्रतिषेधात् पलोपाभावे 'पो व' इति पस्य वं । 'सो' इत्यादि-सूत्रैर्विधीयमाना आदेशा पूर्ववत् । सोमवो । सोमवा । इत्यादि । रामवत् । एव कीलालपाप्रभृतय ॥

इकारान्त पुलिङ्ग कविशब्द । कवि सु इति स्थिते । 'इदुतोर्दि' इत्यधिकृत्य

अक्लुगनपि सोः ॥ २ । २ । २९ ॥

इदुद्भ्या परस्य सो शानुबन्धो लुक् स्यात् । अनपि नपुसकलिङ्गे तु न भवति । 'शिति दीर्घ' इति दीर्घ । बलोप. । कई ॥ कवि जस् इति स्थिते 'चतुरो वा' इत्यत 'वा' इत्यधिकृत्य 'इदुतो —' इति च इदुतोरित्यस्य सुब्व्यत्ययेन पञ्चम्यन्तविपरिणाम ।

पुसो जसो डउ डओ ॥ २ । २ । २४ ॥

पुलिङ्गादिदुतो परस्य जस अउ अओ इत्यादेशौ डितौ वा भवत । कवउ । कवओ । पक्षे 'णो शसश्च' इति वा ण । कइणो । पक्षे 'स्लुग्जश्शसो' इति स्लुक् । कई । सबुद्धौ कवि सु इति स्थिते 'दोर्स्लुक्कौ तु सबुद्धे' इति सोर्वा स्लुक् । शित्वात् पूर्वस्य दीर्घ ।

---

१ सूत्रे is dropped in P and My २ लक्षणम् R, T ३ सर्वत्र सप्रति' R, T ४ M has नात्प । अवर्णात् परस्य पकारस्य लोप स्यात् इति पलोपाभाव । पो व इति &c ५ R drops प्रतिषेधात् ६ 'भाव किंतु R, T ७ वत्वम् । R T ८ भवति । R ९ M and T drop उ १० इत्यधिकृत्य M, R ११ कवओ । M १२ णो वा । R १३ M drops पूर्वस्य

दे कई । श्लुगभावे 'सोर्लुक्' इति लुक् । दे कइ । नात्र डो । अनदन्तत्वात् ॥ जसि पूर्ववत् ॥ द्वितीयैकवचने 'अम' इति म कंइ ॥ शसि 'इदुतोर्दिः' इत्यत 'इदुतो' इति 'चतुरो वा' इत्यत 'वा' इति 'पुसो जस —' इत्यत 'पुसि' इति चाधिकृत्य

**णो शसश्च ॥ २ । २ । २६ ॥**

पुलिङ्गादिदुत परस्य शसश्चाज्जसश्च णो वा स्यात् । कइणो[3] । पक्षे 'श्लुग्जश्शसो' इति श्लुक् । कई[4] । पुस इत्येव । बुद्धी ॥ तृतीयैकवचने कवि टा इति स्थिते 'इदुतोर्दिः' इत्यत 'इदुतो' इत्यधिकृत्य 'नृनपि ङसिङसो' इत्यत 'नृनपि' इति च

**टो णा ॥ २ । २ । २८ ॥**

पुनपुसके वर्तमानादिदुत परस्य टावचनस्य णा भवति । कइणो ॥ कविभिस् इति स्थिते भिसि हिमादय पूर्ववदेव विधेया ॥ 'भिसभ्यसुपि' इत्यधिकृत्य

**इदुतोर्दिः ॥ २ । २ । २२ ॥**

भिसभ्यसुपि परे इदुतोर्दीर्घ स्यात् । कईहिं[1] । बहुलाधिकाराद् 'इदुतोर्दि' इति दीर्घ क्वचिन्न भवति । दिअभूमिसु दाणजलद्धिताइ । द्विजभूमिषु दानजलार्द्रितानि ॥ पञ्चम्येकवचने कैवि ङसिति स्थिते 'णो शसश्च' इत्यत 'णो' इत्यधिकृत्य 'इदुतो' इति च

**नृनपि ङसिङसोः ॥ २ । २ । २७ ॥**

पुलिङ्गे नपुसकलिङ्गे च वर्तमानादिदुत परयो ङसिङसोर्णो

---

१ My and P have हरिं after कइ  २ 'इदुतोर्दि' 'चतुरो वा' 'पुसो जस —' इत्यत इउ इओ इत्यधिकृत्य M  ३ My, P and M have हरिणो after it  ४ इति शस इउरि M  ५ My, P and M have हरी after it  ६ कद्दी My  ७ इत्यधिकृत्य M  ८ इति च M  ९ हरिणा after this in My, P and M  १० M, My and P have हरीहिं after it  ११ डियभूमिसु M  १२ हरि ङसिति P, My, M  १३ इत्यधिकृत्य M  १४ 'दिदुतो M

इत्यादेशो वा स्यात्[1] । कविणो[2][3] । 'ङनपि' इति णित् । दुर्दीर्घ[4] ।
पक्षे ङसिङसोर्दोदुर्वेत्यत्र । कइणोहिन्तो[5] । कइत्तो । कईओ । कईउ ।
ङसिङसोर्हिरिति नास्ति । अनदन्तत्वात् ॥ भ्यसि उक्ता हिन्तोप्रभृतय
सुन्तो च । 'इदुतोर्दिः' इति दीर्घ । कईहिन्तो[6] । इत्यादि ॥ षष्ठ्येक-
वचने 'ङनपि ङसिङसो' इति वा णो[7] । कइणो[8] । पक्षे 'ङसोसिया सर'
इति द्विरुक्त सकार । कइस्स[9] ॥ सप्तम्येकवचने मिरेव । कविम्मि[10] ॥
बहुवचने 'इदुतोर्दिः' इति दीर्घ[11] । कईसु[12] । कवीसु ॥ शेष रामवत् ॥

अथ इकारान्तेषु केचिद्विशेषा प्रदर्श्यन्ते ॥ ध्वनि सु इति स्थिते
'उद्ध्वनि—' इत्यादिना वकारसम्बन्धिनो वर्णस्योत्त्वम् । 'लवराम्—'
इति वलोप । धुणी ॥

त्यथ्यद्वध्वां क्वचिच्चछजझाः ॥ १ । ४ । ६५ ॥

त्यथ्यद्वध्व इत्येषा यथासख्य क्वचित् प्रयोगानुसारेण चछजझ इत्येते
आदेशा भवन्ति । इति ध्वस्य झादेशे । झणी[13] ॥ शेष कविवत्[14] ॥
तित्तिरिशब्दे

रस्तित्तिरौ ॥ १ । २ । ४४ ॥

'मूषिकविभीतक—' इत्यादेरदित्यनुवर्तते[16] । 'त्वदित' इत्यत
'इत' इति च[17] । अत्र रेफसम्बन्धिन इवर्णस्यात्व भवति । तित्तिरो ॥
शेष रामवत् ॥ ऋषिशब्दे 'मतु मजुनर्णर्षिपि—' इत्यादिना ऋका-

---

१ भवति for वा स्यात् R  २ My and P have हरिणो in place of कविणो  ३ M has हरिणो after it  ४ °दध । M  ५ My P and M have हरिहिन्तो । हरित्तो । हरीओ । हरीउ । in place of कर्वाहिंतो । &c  ६ कइहिन्तो । M  ७ णो वा M  ८ M, My and P have हरिणो in place of कइणो ।  ९ M, My and P have हरिस्स ।  १० My and P have हरिम्मि, M has both  ११ इदुतोरिति दीर्घ । M  १२ My and P have हरीसु ।  १३ रवरेति वलोप । M, T  १४ My and P have यथासंख्य after प्रयोगानुसारेण  १५ कविवद्धरिवच्च । My, M, P  १६ र इत्यत्र M  १७ M drops 'त्वदित' इत्यत  १८ °ऋषिनपम—' M

रस्य वा रिः । रिसी । पक्षे । कृपादित्वादिल् । इसी । अग्निशब्दे 'स्नेहाग्न्योर्वा' इति सूत्रेण युक्तस्यान्त्यहल मोऽन्वा अत्वे । अगणी । पक्षे । अग्गी । अत्र 'मनयाम्' इति नेलोप । शेषद्वित्वं च ॥ पदातिशब्दे

**तिर्यक्पदातिशुक्तेस्तिरिच्छिपायिकासिप्पि ॥ १ । २ । १०४ ॥**

तिर्यगादेस्तिरिच्छयादय आदेशा यथाक्रम वा स्युः । इति पायिकादेशे । पायिको ॥ शेषं रामवत् । पक्षे । दंतयोर्लोपे । पआई ॥ अक्षिशब्दे 'अक्ष्यर्थकुलाद्या वा' इति पुलिङ्गताया स्पृहादित्वात् क्षस्य छत्वे । अच्छी । अस्यैवाञ्जल्यादिपाठात् स्त्रीलिङ्गेपि प्रयोग ॥ रश्मिशब्दे मलोपे रस्सी । नात्र 'श्मप्म—' इत्यादिना सौदेश । 'असररश्मौ' इति प्रतिषेधात् ॥ किरिशब्दे 'किरिबेरे[6] ड[7]' इत्यनेन रेफस्य डत्वम् । किडी ॥ शौद्धौदनिशब्दे 'शोण्डगे' इत्यनेन शोण्डादिपाठादादेरेच उत्वम् । सुद्धोअणी ॥ बृहस्पतिशब्दे 'ऋतोत्' इत्यधिकृत्य 'इदुन्मात्तु' इत्यत 'इदु' इति च

**तु बृहस्पतौ ॥ १ । २ । ८५ ॥**

अत्र ऋत इदुतौ वा भवत । पक्षे अत्वम् । तथा च निहस्पति बुहस्पति बहस्पति इति स्थिते

**भ्यौ बृहस्पतौ तु बहोः ॥ १ । ३ । ७५ ॥**

अत्र बकारहकारयोर्यथाक्रम भकारयकारौ भवत । तथा च भियस्पति । भुयस्पति । भयस्पति । पक्षे उक्तानि त्रीणि रूपाणि । एव षट्स्वपि रूपेषु 'प्पस्पो फ' इत्यत 'फ' इत्यधिकृत्य

**श्लेष्मबृहस्पतौ तु फोः ॥ १ । ४ । ४६ ॥**

अनयो फोर्द्वितीयस्य स्तो फो वा स्यात् । इति फत्वे निहप्फई । बुहप्फई । बहप्फई । भियप्फई । भुयेप्फई । भयप्फई । फत्वाभावे

---

१ प्रागत्वे M, प्रागत्व वा स्यात् R, T २ नलोप शेषद्वित्वे च । M, नलोपे शेषद्वित्वम् । R ३ °स्तिरिप्या° M ४ दंतयोर्लोपे My, P ५ स्यादेश । M ६ भेरे M ७ इति च M ८ तु भवत । M ९ भुअप्फई । M १० भअप्फई । M

सो बृहस्पतिवनस्पत्योः[1] ॥ १ । ४ । ७४ ॥

'ष्टो ठोरस्थारब्धे तु' इत्यत्र 'तु' इत्यनुवर्तते । अनयोर्युक्तस्य यो स स्यात् । इति सस्य वा सत्वे । बिहस्सई । बुहस्सई । बहस्सई । भियस्सई । भुवस्सई । भयस्सई ॥ यदा युक्तस्य पक्षमत्वयोरभावस्तदा 'ष्क—' इति सलोपे शेषस्य द्वित्वे बिहप्फई इत्यादीनि षड् रूपाण्युदाहर्तव्यानि । इति बृहस्पतिशब्दस्याष्टादश प्रकाराः ॥ वनस्पतिशब्दे 'सो बृहस्पतिवनस्पत्योः' इति वा युक्तस्य सत्वे वणस्सई । सत्वाभावे 'ष्पस्पो' इति फ । वणप्फई ॥ द्विशब्दस्य सर्वत्र बहुवचनमेव । 'चतुरो जश्शस्भ्याम्—' इत्यत 'जश्शस्भ्याम्' इत्यधिकृत्य

दोण्णि दुवे बेण्णि द्वेः ॥ २ । ३ । २० ॥

द्विशब्दस्य जश्शस्भ्यां सह दोण्णि दुवे बेण्णि इति त्रय आदेशा भवन्ति । दोण्णि । दुवे । बेण्णि । इति स्थिते 'संयोगे' इति ह्रस्वे कर्तव्ये अनुक्तसमुच्चयन्यायेन एत इकारस्यादेश इति इत्वेव भवति । दुण्णि पुरिसा । बिण्णि पुरिसा । अत्रानुक्तन्यायेन ह्रस्वो नास्तीति केचित् । तदा दोण्णि । बेण्णि । दुवे । 'दोवे टादौ च' इति विधास्यमानौ दो वे इत्यादेशावपि । तथा च जसि । दोण्णि । दुण्णि । बेण्णि । बिण्णि । दो । वे । दुवे । शस्येतान्येव ।

दो वे टादौ च ॥ २ । ३ । २१ ॥

'द्वे'[11] इत्यनुवर्तते । द्विशब्दस्य टादौ तृतीयादौ[12] सुपि परे चकाराज्जश्शस्भ्यां सह दो वे इत्यादेशौ भवतः । अत्र सूत्रे 'टादौ' इत्यतद्गुण बहुव्रीहिमङ्गीकृत्य टावचनस्य विधेयान्वयः परिहर्तव्यः । अन्यथा

1 M drops 'ष्टो ठो रस्थारब्धे तु' इत्यत्र 'तु' इत्यनुवर्तते 2 सो वा M
3 शेषद्वित्वे M 4 इत्यादि M 5 °शब्दरूपस्य M 6 सत्वम् । T
7 My and P drop सर्वत्र 8 ह्रस्वो M 9 M drops दोण्णि ।
10 R and T add इति सप्तादेशाः after it 11 My M and P drop 'द्वे' इत्यनुवर्तते । 12 [illegible] 13 [illegible] by M,

तत्रापि दो वे स्याताम् । तथा च द्विशब्दस्याप्येकवचनतापात । तत्तु विरुद्धम् । तस्मादतद्गुणबहुव्रीहिमाश्रित्य भिसादीनामेव विधेयान्वयो न तु टावचनस्य । अथ यद्यतद्गुणबहुव्रीह्याश्रयणाद्भिसादीना विधेयान्वयस्तर्हि ङेसाद्येकवचनानामपि भिसादित्वात् तेषामपि विधेयान्वयापात इति तदिदमविदितमीमासावृत्तान्तस्य भाषितम् । यथा हस्तेनावद्यति । स्रुवेणावद्यति । स्वधितिनावद्यति । इत्यत्र हस्तादीना सामान्येन द्रवसहिताज्यमासपुरोडाशाद्यवदानसाधनत्वे प्रतीतेपि सामर्थ्यपर्यालोचनया हस्तादीनामवदानविशेषान्वय कल्पितस्तथात्रापि भिसादीना सर्वेषा सामान्येन विधेयान्वये प्रतीतेपि एकवचनसामर्थ्यपर्यालोचनया ङेसाद्येकवचनाना द्विशब्दे विधेयान्वय परिहर्तव्य । यद्वा 'दो वे टादौ' इत्यत्र द्विशब्दस्य नित्यद्विवचनवाचित्वेपि गौणतायामेकवचनस्यापि सभवाट्टाद्येकवचनेष्वप्येतयो प्रयोग इत्यल सूत्रकलहचर्चया । प्रकृतमनुसराम । भिसि दो भिस् वे भिस् इति स्थिते हिमादय पूर्ववद् भिसादीना विधेया । दोहि । दोहिँ । दोहि । एव वेहि । इत्यादि । भ्यसि । दोहिंतो । दोत्तो । दोओ । दोउ । दोसुंतो । एव वेहिंतो । इत्यादि । आमि

ण्ह ण्हं सख्याया आमोर्विशतिगे ॥ २ । ३ । ३३ ॥

सख्याया परस्याम ण्ह ण्ह इत्येतावादेशौ भवत अविंशतिगे विंशत्यादीन् वर्जयित्वा । दोण्ह । दोण्ह । वेण्हं । वेण्ह । दोसु । दोसु । वेसु । वेसु ॥ त्रिशब्दस्य 'चतुरो जश्शस्भ्याम्—' इत्यत 'जश्शस्भ्याम्' इत्यनुवर्तते ।

तिण्णि त्रेः ॥ २ । ३ । २९ ॥

त्रिशब्दस्य जश्शस्भ्या सह तिण्णि इत्यादेशो भवति । जसि । तिण्णि । शसि । तिण्णि । 'दो वे टादौ च' इत्यत 'टादौ' इत्यधिकृत्य

१ °द्भिसादीनामेव M २ °मविदित T ३ °साधनत्वेपि My, P
४ हस्ता M ५ द्विशब्देन M ६ हेया T ७ वेह्न । वेह्न । M

**ति त्रेः ॥ २ । ३ । ३२ ॥**

त्रिशब्दस्य टादौ तृतीयादौ सुपि परे ति इत्यादेशो भवति । तिहि । तिँहि । तिहिं । शेष द्विशब्दवत् । द्विन्योर्लिङ्गत्रयेपि समान रूपम् ॥ विधिशब्दे यस्य ह्रस्वे विही । अस्याञ्जल्यादिपाठात् स्त्रीलिङ्गेपि प्रयोग । एव वलिनिधिप्रभृतीनामपि स्त्रीलिङ्गे प्रयोग ॥

इति इकारान्ता ॥

---

ईकारान्त पुल्लिङ्गो ग्रामणीशब्द । 'क्विप' इति ह्रस्व । गामणी ॥ जसि । गामणउ । गामणओ । गामणिणो ॥ सबुद्धौ तु 'डोह्लुकौ तु सबुद्धे' इत्यत 'सबुद्धे' इत्यधिकृत्य

**ह्रस्वलीदूतः ॥ २ । २ । ४६ ॥**

सबुद्धिनिमित्तयोरीदूतोर्ह्रस्वो लिग्भवति । दे गामणि । शेष कवि-शब्दवत् ॥ एवमग्रणीसेनानीवातप्रमीर्सुधीसुश्रीप्रभृतय ॥

ईति ईकारान्ता ॥

---

उकारान्त पुल्लिङ्ग कारुशब्द । एकवचन कविशब्दवत् । कारू ॥ जसि । 'पुसो जसो डउ डओ' इत्यधिकृत्य 'चतुरो वा' इत्यत. 'वा' इति च

**डवो उत ॥ २ । २ । २५ ॥**

पुल्लिङ्गादुत परस्य डित् अवो इत्यादेशो वा भवति । कारवो । पक्षे डउ डओ च । कारउ । कारओ ॥ सबुद्धौ 'डोह्लुको तु सबुद्धे' इति वा ह्लुक् । दे कारू । ह्लुगभावे 'सोर्लुक्' इति लुक् । दे कारु । उकारान्तत्वमेव विशेष । शेष कविवत् । एव वायुसेतुप्रभृतय ॥

---

१ तीर्हिं । ताह्नि । तिहि । P, My, M has तिहि । तिहिद् । तीहि । २ इत्यधिकृत्य M ३ T drops शब्द ४ सुश्रीसुधी° T ५ M drops इति ईकारान्ता । ६ M, R and T drop शब्द ७ इति वा । M ८ स्यात् । M

अथोकारान्तेषु केचिद्विशेषा[1] प्रदर्श्यन्ते । पशुशब्दे वक्रादित्वा-द्बिन्दु । पसू ॥ पांसुशब्दे 'लुङ् मासादौ' इति मांसादित्वादित्वाद् बिन्दोर्वा लुक् । पासू । पक्षे 'स्वरस्य बिन्द्वमि' इति ह्रस्वे । पसू ॥ स्थाणुशब्दे 'स्तो' इत्यधिकृत्य 'क्ष्वेडकगे खल्' इत्यत 'खल्' इति च ।

स्थाणावहरे ॥ १ । ४ । ९ ॥

अहरवाचिनि स्थाणुशब्दे स्तो खत्व लित् स्यात् । खाणू । अस्य दैवादिपाठाद् द्वित्वे खण्णू । हरे तु थाणू । अत्र 'कग—' इति सलोप । इक्षुप्रवासिशब्दयो 'द्विनीक्षुप्रवासिषु' इत्यनेन आदेरित उत्वम् । उच्छू । अस्य स्पृहादित्वात् क्षस्य छ । पैवासू । पावासू । प्रवासी । अत्र समृध्यादिपाठादादेरचो वा दीर्घ ॥ कृशानुशब्दे कृपादित्वादृत इत् । किसाणू । भृगु । भिऊ । मृत्युशब्दे 'शृङ्गमृगाङ्क-मृत्यु—' इत्यादिना वा ऋत इत्वम् । मिचू । पक्षे अत्वम् । मंचू । उभयत्र 'त्योचैत्ये' इति त्यस्य च ॥ ऋतुऋजुशब्दयो ऋत्वादिपाठादृत उत्वम् । ऋतु । उऊ । ऋजु । उज्जू । अत्र तैलादित्वाद् द्वित्वम् । अनयोरेव 'ऋतुऋजुऋण—' इत्यादिना ऋतो वा रिरने[11] रिऊ । रिज्जू ॥ अभिमन्युशब्दे 'वो व' इत्यत 'व' इत्यधिकृत्य

स्वभिमन्यौ मः ॥ १ । ३ । ६५ ॥

अत्र मस्य वो वा भवति । अहिवण्णू । अहिमण्णू ॥ अत्रैव

स्वभिमन्यौ जञौ ॥ १ । ४ । २५ ॥

'स्तो' इत्यनुवर्तते । अत्र स्तो जञ् ज इत्येतावादेशौ वा भवत ।

---

१ केचिद् T २ My and P drop मांसादित्वात् ३ My has पावासू । पवासू । प्रवासी । ४ इत् My ५ मिछू T ६ ऋत अत्वम् M, T ७ मच्चू M ८ ऋत्वादित्वात् M ९ उ My, P १० 'ऋतुऋण—' इत्यादिना My ११ ऋत्वे My

आदिमेरित्वाद् द्वित्वम् । अहिवज्जू । अहिमज्जू । अहिवजू । अहि-
मजू ॥ मन्युशब्दे

**वा न्तन्धौ मन्युचिह्नयोः ॥ १ । ४ । ३२ ॥**

'सो' इत्यनुवर्तते । अनयोर्यथाक्रम त न्ध इत्यादेशौ वा भवत ।
मन्तू । पक्षे । मण्णू । अत्र 'मनयाम्' इति । यलोप ॥ कटुशब्दे
'सरकट्वोरीसरकारौ' इति कटुशब्दस्य वा कारादेशे । कारो । इत्यादि
रामवत् । पक्षे । कडू इत्याद्यूह्यम् ॥ उकारान्त पुलिङ्ग क्रोष्टुशब्द ।
क्रोष्टु सु इति स्थिते 'तृज्वत् क्रोष्टु' 'विभाषा तृतीयादिष्वचि' इति
यदा तृज्वद्भावस्तदा 'उद्दता त्वसमामि' इत्यत 'ऋत' इत्यधिकृत्य

**आ सौ वा ॥ २ । २ । ५२ ॥**

ऋदन्तस्य सौपरे आत्व वा स्यात् । क्रोष्टा सु इति स्थिते 'लव-
राम्—' इति रेफलोप । 'ष्ट' इति ष्टस्य ठत्वे 'सोर्लुक्' इति
सोर्लुक् । कोट्ठा । यदा आत्वाभावस्तदा

**आरः सुपि ॥ २ । २ । ४९ ॥**

'ऋताम्' इत्यनुवर्तते । ऋदन्तस्य सुपि परे आर इत्यादेशो
भवति । कोट्ठारो । इत्यादि सर्वत्र वचनेषु रामवत् । समासे त्वन्तर्व-
र्तिनीं विभक्तिमाश्रित्य रादेशस्तेन कोट्ठारकअमित्याद्यपि सर्वत्र ऋका-
रान्तेषु सचारणीयम् । लुप्तविभक्त्यपेक्षया भर्तार विहिअमिति भव-
तीति त्रिविक्रमदेववचनात् ।

**उद्दतां त्वसमामि ॥ २ । २ । ४८ ॥**

'आर सुपि' इत्यत 'सुपि' इत्यनुवर्तते । ऋदन्तानामुत्व वा
स्यादसमामि सु अम् आम् वर्जिते सुपि परे ॥ अत्र 'ऋताम्' इति
बहुवचन व्याप्त्यर्थम् । तेन यथादर्शन नाम्युत्व भवतीति वेदितव्यम् ।
इति यत्रोत्व तत्र कारुवत् । सौ । कोट्ठारो । जसि । कोट्ठओ ।

---

१ कटुशब्दस्य My २ इत्यधिकृत्य M ३ M has कोट्ठार after it
४ दन्ते व M ५ 'रान्तेष्वपि M ६ त्रिविक्रमवचनात् R T

कोट्ठउ । कोट्ठुणो । कोट्ठवो । उत्वाभावे आर । कोट्ठारा । अमि । कोट्ठार । आमि । कोट्ठाराण । नात्रोत्वम् । 'अत्समामि' इति प्रतिषेधात् । शेष रामवत् कारुवच्च ॥ ऊकारान्त पुलिङ्ग खलपूशब्द । 'क्विप' इति ह्रस्व । पस्य व । खलपू । इत्यादि । कारुवत् । एव काडलू स्वयभू मनोभू प्रतिभूप्रभृतय ॥

इत्यूकारान्ता ॥

---

ऋकारान्त पुलिङ्ग पितृशब्द ॥ पितृ सु इति स्थिते 'असौ' इति ऋत अत्व तलोप । सोर्लुक् । पिआ । 'आर सुपि' इत्यधिकृत्य

संज्ञायामरः ॥ २ । २ । ५१ ॥

ऋद तस्य सज्ञाया सुपि परे अर इत्यादेशो वा स्यात् । पिअरो ॥ जसि पिअरा । 'उद्दता त्वसमामि' इत्युत्व च । पिअओ । पिअउ । पिअवो । पिउं । णो पिउ । सबुद्धौ 'डोस्लुकौ तु सबुद्धे' इत्यत 'सबुद्धे' इत्यधिकृत्य

ड ऋदन्तात् ॥ २ । २ । ४३ ॥

ऋकारान्तान्नाम्न परस्य सबुद्धेर्डत्व तुं स्यात् । दे पिअ ।

नाम्नि डरम् ॥ २ । २ । ४४ ॥

'सबुद्धे' इत्यनुवर्तते । नाम्नि सज्ञाया ऋदन्तात् परस्य सबुद्धे डित् अरमित्यादेशो वा स्यात् । दे पिअर । 'नाम्नि' इति किम् । दे कचार । अरादेशे दे पिअरो । दे पिअर । अमि । पिअर । आमि । पिअराण । पिअराण । नात्रोत्वम् । 'अत्समामि' इति प्रतिषेधात् । आरादेशे रामवदुत्वे कारुवत् । एव भ्रातृजामातृप्रभृतय ॥ कर्तृशब्दस्य तु 'तेस्याधूर्तादौ ट' इति तेस्य टत्वम् । बहुलाधिकारादत्र विकल्पि-

---

१ कोट्ठारो M २ असौ वेत्युत आत्वम् M ३ भवति for वा स्यात् M, R ४ पिअणो for पिउ । ५ इत्यधिकृत्य M ६ भवति for स्यात् M

तम् । टत्वपक्षे 'आ सौ था' इत्यात्वम् । फट्टा । टत्वाभावे 'स्वराग—' इति रेफलोप । शेषेद्वित्वम् । फत्ता । 'आरः सुपि' इत्याद्य । फट्टारो । फत्तारो ॥ जसि । फट्टारा । फत्तारा । 'उद्दुतात्' इत्युत्वे । फट्टउ । फत्तउ । इत्यादि । संबुद्धौ 'उ गदन्तात्' इत्युत्वम् । दे फट्ट । दे फत्त । नात्र दरभरौ । तयो सेनाविषयत्वात् । शेषमात्रा देशो रामवत्सुत्यादेशे पाण्डवत् । एष भर्तृहर्तृनेतृप्रभृतय' । ऋका रान्तलृकारान्तऐकारान्तओपसिद्धा । ऐकारान्त पुंलिङ्ग सुरैशब्द । 'ऐच ऐद्' इत्येने पदस्तस्य प्रयोगाभावात 'स्वार्थे तु कश्च' इति कप्र त्यय । ककारलोप । सुरेओ ॥ जसि । सिद्धायसापेक्षया सुरा । दे सुरेअ । दे सुरेओ । सुरेअ । इत्यादि रामवत् । भिस्भ्यस्सुपि सिद्धानस्यापेक्षया 'रायो हलि' इत्याकारश्च । सुराहि । सुराहिंतो । सुरासु । इत्यादि ॥ ओकारान्त पुलिङ्गो गोशब्द । गो सु इति स्थिते 'चपेटकेसरदेवरसैन्यवेदनासेचारित्वत्' इत्यत 'एच' इत्यनुवर्तते ।

गव्य उदाहृत् ॥ १ । २ । ९९ ॥

गोशब्दे एच अउ आइ इत्यादेशौ भवत । गऊ ॥ जसि । गैंवउ । गवओ । गवयो । इत्यादि । कारयत् । गाई कनिवत् ॥ औकारान्त पुलिङ्गो ग्लौशब्द । लादक्लीबेष्वन्त्यहल भागित्वम् । ऐच एद् । कप्रत्यय । गिळोओ । गिळोआ । इत्यादि । रामवत् ॥ हसितव्य इत्यादिषु 'अदेल्लुक्यात् सो —' इत्यत 'अत' इत्यधिकृत्य 'मोमनुष्विश' इत्यत 'इत्' इति च ।

एच क्त्वातुमुत्तव्यभविष्यति ॥ २ । ४ । १८ ॥

क्त्वादिषु परेषु भविष्यत्कालविहिते च प्रत्यये परतोत एत्व

१ लोपद्वित्वानि M, R २ इत्युत्व च M ३ ओकारान्त M ४ या त्रासिद्धा । My ५ एद् M ६ सुराआ । M ७ सुरेओ M ८ सुरेआ M ९ सुरेओ M १० आयि M ११ गऊ गओ गवा M.

चकारादित्व च वा स्यात् । हंसिअव्वो । हसेअव्वो । णदिअव्वो । णदेअव्वो । इत्याद्यूह्यम् । एव हलन्तेषु अगागमे सर्वत्रोह्यम् ॥

इत्यजन्ता पुलिङ्गा ॥

---

## अथाजन्ताः स्त्रीलिङ्गाः ॥

आकारान्त स्त्रीलिङ्गो जायाशब्द । जाया सु इति स्थिते यकारस्य 'प्रायो लुक्—' इति लोपे 'यश्रुतिर' इत्याकारस्य यश्रुतित्वम् । 'सोर्लुक्' इति सोर्लुक् । जाआ ॥ जसि जाआ जसिति स्थिते 'श्भि शिं शिङ् जश्शसो' ईत्यत 'जश्शसो' इत्यधिकृत्य

**ओ शु स्त्रिया तु ॥ २ । २ । ३२ ॥**

स्त्रिया वर्तमानान्नाम्न परयो जश्शसो ओ उ इत्यादेशौ शितौ वा भवत । जाआओ । जाआउ । शित्करणस्यात्र प्रयोजनाभावेपि इकारान्तस्त्रीलिङ्गादौ दीर्घार्थं भविष्यति । पक्षे 'श्लुग्जश्शसो' इति श्लुक् । जाआ । सबुद्धौ 'डोर्लुकौ तु सबुद्धे' ईत्यत 'तु सबुद्धे' इत्यधिकृत्य

**टापो डे ॥ २ । २ । ४५ ॥**

टावन्तात् परस्य सबुद्धेरेत्व डित्वा भवति । दे जाए । पक्षे सोर्लुक् । दे जाआ । बहुलाधिकारात् क्वचिदोत्वमपि । दे जाओ ॥ अमि जाआ अमिति स्थिते 'अम' ईत्यमो मत्वम् । 'स्वरस्य बिन्द्वमि' इति ह्रस्व । जाअ ॥ शसि जस्वत् ॥ जाआ टा इति स्थिते 'ङसे श शा शि शे' ईत्यत 'श शा शि शे' इत्यधिकृत्य

**टाङिङसाम् ॥ २ । २ । ३५ ॥**

---

१ हसेअव्वो । हसिअव्वो । M २ णदेअव्वो । णदेअव्वो । णदिअव्वो । M ३ अथाजन्तस्त्रीलिङ्गा My, P, M ४ यलोपे T, R ५ इत्यधिकृत्य M, T, R ६ वर्तमानयोर्नाम T, R ७ दो M, R ८ इत्यधिकृत्य M, T, R ९ जाया M १० इति मत्वम् T ११ जाया M १२ इत्यधिकृत्य M, T, R

तम् । टत्वपक्षे 'आ सौ वा' इत्यात्वम् । कट्टा । टत्वाभावे 'लवराम्—' इति रेफलोप । शेषद्वित्वम् । कत्ता । 'आर सुपि' इत्यारश्च । कट्टारो । कत्तारो ॥ जसि । कट्टारा । कत्तारा । 'उदृताम्' इत्युत्वे । कट्टउ । कत्तउ । इत्यादि । सबुद्धौ 'उ ऋदन्तात्' इत्युत्वम् । दे कट्ट । दे कत्त । नात्र डरमरौ । तयो सज्ञाविषयत्वात् । शेषमारादेशे रामवदुत्वादेशे कारवत् । एव भर्तृहर्तृनेतृप्रभृतय । ऋकारान्तलृकारान्तएकारान्तश्चाप्रसिद्धा । ऐकारान्त पुलिङ्ग सुरैशब्द । 'ऐच एङ्' इत्येत्वे एदन्तस्य प्रयोगाभावात् 'स्वार्थे तु कश्च' इति कप्रत्यय । ककारलोप । सुरेओ ॥ जसि । सिद्धावस्थापेक्षया सुरा । दे सुरेअ । दे सुरेओ । सुरेअ । इत्यादि रामवत् । भिस्भ्यस्सुपि सिद्धावस्थापेक्षया 'रायो हलि' इत्याकारश्च । सुराहि । सुराहिंतो । सुरासु । इत्यादि ॥ ओकारान्त पुलिङ्गो गोशब्द । गो सु इति स्थिते 'चपेटकेसरदेवरसैन्यवेदनाखेचरित्वत्' इत्यत 'एच' इत्यनुवर्तते ।

गव्य उदाहृत् ॥ १ । २ । ९९ ॥

गोशब्दे एच अउ आइ इत्यादेशौ भवत । गऊ ॥ जसि । गेवेउ । गवओ । गववो । इत्यादि । कारवत् । गाई कथित् ॥ औकारान्त पुलिङ्गो ग्लौशब्द । लादक्षीबेष्वन्त्यहल भागित्वम् । 'ऐच एङ्' । कप्रत्यय । गिळोओ । गिळोआ । इत्यादि । रामवत् ॥ हसितव्य इत्यादिषु 'अदेल्लुक्याद् रो —' इत्यत 'अत' इत्यधिकृत्य 'भोमसुप्विश' इत्यत 'इत्' इति च ।

एच्च क्त्वातुमुन्तव्यभविष्यति ॥ २ । ४ । १८ ॥

क्त्वादिषु परेषु भविष्यत्कालविहिते च प्रत्यये परतोत एत्व

१ शेषद्वित्वानि M, R २ इत्युत्व च M ३ ओकारान्त M ४ °श्चाप्रसिद्धा । My ५ एच् M ६ सुराआ । M ७ सुरेओ M ८ सुरेआ M ९ सुरेओ M १० आणि M ११ गद गओ गवो M

चकारादित्व च वा स्यात् । हंसिअव्वो । हसेअव्वो । णंदिअव्वो । णदेअव्वो । इत्याद्यूह्यम् । एव हलन्तेषु अगागमे सर्वत्रोह्यम् ॥

इत्यजन्ता पुलिङ्गा ॥

## अथाजन्ताः स्त्रीलिङ्गाः ॥

आकारान्त स्त्रीलिङ्गो जायाशब्द । जाया सु इति स्थिते यकारस्य 'प्रायो लुक्—' इति लोपे 'यश्रुतिर' इत्याकारस्य यश्रुतित्वम् । 'सोर्लुक्' इति सोर्लुक् । जाआ ॥ जसि जाआ जसिति स्थिते 'श्नि शिं शिङ् जश्शसो' ईत्यत 'जश्शसो' इत्यधिकृत्य

**शो शु स्त्रिया तु ॥ २ । २ । ३२ ॥**

स्त्रिया वर्तमानान्नाम्न परयो जश्शसो ओ उ इत्यादेशौ शितौ वा भवत । जाआओ । जाआउ । शित्करणस्यात्र प्रयोजनाभावेपि इकारान्तस्त्रीलिङ्गादौ दीर्घार्थं भविष्यति । पक्षे 'श्लुग्जश्शसो' इति श्लुक् । जाआ । संबुद्धौ 'डोर्लुकौ तु सबुद्धे' ईत्यत 'तु सबुद्धे' इत्यधिकृत्य

**टापो डे ॥ २ । २ । ४५ ॥**

टावन्तात् परस्य सबुद्धेरेत्व डिद्वा भवति । दे जाए । पक्षे सोर्लुक् । दे जाआ । बहुलाधिकारात् कचिदोत्वमपि । दे जाओ ॥ अमि जाआ अमिति स्थिते 'अम' ईत्यमो मत्वम् । 'स्वरस्य बिन्दुमि' इति ह्रस्व । जाअं ॥ शसि जस्वत् ॥ जाआ टा इति स्थिते 'ङसे श शा शि शे' ईत्यत 'श शा शि शे' इत्यधिकृत्य

**टाङिङसाम् ॥ २ । २ । ३५ ॥**

१ हसेअव्वो । हसिअव्वो । M २ णदेअव्वो । णदेअव्वो । णदिअव्वो । M ३ अथाजन्तस्त्रीलिङ्गा My, P, M ४ यलोपे T, R ५ इत्यधिकृत्य M, T, R ६ वर्तमानयोर्नाम्न T, R ७ दो M, R ८ इत्यधिकृत्य M, T, R ९ जाया M १० इति मत्वम् T ११ जाया M १२ इत्यधिकृत्य M, T, R.

स्त्रिया नाम्न परेषा टाङिङस् इत्येतेषा स्थाने अ आ इ ए इत्येते चत्वार आदेशा शितो भवन्ति । पृथक्त्वान्नित्यम् । जाआअ । जाआइ । जाआए । अत्रापि शित्करणस्य इकारान्तस्त्रीलिङ्गेषु फलम् ।

नातः शा ॥ २ । २ । ३६ ॥

स्त्रिया वर्तमानान्नाम्न परेषा टाङिङसा प्रोक्त शा इति शिदात्व आकारान्तान्न भवति । इति प्रतिषेधादत्र आकारस्योदाहरण न सम्भवति ॥ भिसि जाआहिं । इत्यादि पूर्ववत् ॥ ङसो

ङसेः श्र शा शि शे ॥ २ । २ । ३४ ॥
'शो ङ्स्त्रियाम्' इत्यत 'स्त्रियाम्' इत्यनुवर्तते । स्त्रिया वर्तमानान्नाम्न परस्य ङसे अ आ इ ए इति चत्वार आदेशा शितो भवन्ति ॥ जाआअ । जाआआ । जाआइ । जाआए । अत्र सर्वत्र 'अपदे' इति प्रतिषेधान्न सधि । पक्षे हिन्तोत्तोदोदवश्च । भ्यसि सुतो च । जाआ हिन्तो । इत्यादय । पूर्ववत् । 'भिस्भ्यस्सुपि' इति एत्व न भवति । अनदन्तत्वात् । शेष पूर्ववत् । एव मालादय ॥ जराशब्दस्य तु अनुक्तमन्यन्यायेन 'जराया जरसन्यतरस्याम्' इति यत्र यत्र जरसादेशस्तत्र तत्र 'अन्त्यहलोऽश्रदुदि' इत्यत 'अन्त्यहल' इत्यधिकृत्य

अनिद्युति स्त्रियामाल् ॥ १ । १ । २९ ॥
स्त्रीलिङ्गे वर्तमानस्यान्त्यहल आत्व भवति । लित्वान्नित्यम् । इति सस्यात्वे जरसा । जरसाओ । जरसाउ । इत्यादि । जायावत् । जरसभावे जरा इत्यादि । जायावत् । वृक्षत्व कवित्वमित्यादौ त्वप्रत्ययस्य

त्वस्य तु डिमात्तणौ ॥ २ । १ । १३ ॥

---

१ इत्येषा M २ स्त्रीलिङ्गे परम् M ३ प्राप्त My, P ४ शिदाकार Mv P ५ शाप्रत्ययस्यो My, P ६ इत्येतेष्वेत्व T, R ७ M drops one तत्र ८ इत्यधिकृत्य M, P, T ९ °मात् T, R १० जरसाइ । My

रप्रत्ययस्य डित् । इमाचण इत्यादेशौ वा भवत । इति त्वम्ये मादेशे 'स्त्रियामिमाजलिगा' इति स्त्रीलिङ्गताया अनुक्तमन्यन्यायेन डित्वाट्टिलोपे रुक्खिमा । वंच्छिमा । कइमा । इत्यादि । जायावत् ।

अथाकारान्तेषु केषुचिद्विशेषा प्रदर्श्यन्ते । सास्नाशब्दे 'हे दक्षिणेस्स' इत्यत 'अस्य' इत्यधिकृत्य 'उलूध्वनि गवयविप्ववित्वि व' इत्यत 'उल्' इति च

स्नावकसास्ने ॥ १ । २ । १८ ॥

अनयोरादेरवर्णस्योल् स्यात् ॥ 'श्न्ष्ण—' इत्यादिना ण्हादेश । सुण्हा । नात्र 'स्रौ' इत्युत ओत्वम् लाक्षणिकत्वाद्बहुलाधिकाराद्वा स्वभावतोनुदन्तत्वाद्वा ॥ आर्याशब्दे

आर्याया र्यः श्वश्र्वाम् ॥ १ । २ । २१ ॥

श्वश्रूवाचिन्यार्याशब्दे र्यकारसंबधिनोवर्णस्य ऊत्व लित् स्यात् । 'यय्यर्या ज' इति र्यस्य जत्वम् । 'संयोगे' इति ह्रस्व । उज्जू । रूपाणि तु वक्ष्यमाणोकारान्तस्त्रीलिङ्गवत् । 'श्वश्र्वाम्' इति किम् । अज्जा ॥ जिह्वाशब्दे 'ऊर्ध्वे भो वा' इत्यत 'भ' इत्यधिकृत्य

ह्वः ॥ १ । ४ । ५१ ॥

ह्वस्य भो वा स्यात् ॥ जिब्भा । पक्षे 'लवराम्—' इति वलोपे 'शोर्ष्मयवरशोर्दि' इति इति लुसयादीना शषसानामादेरचो दीर्घप्रसङ्गे बहुलाधिकारादन्यस्याप्यादेरचो दीर्घ इति त्रिविक्रमदेवेन जिह्वाशब्दस्योदाहरणादादेरचो दीर्घे जीहा इत्यादिषु दीर्घप्रयोग सिद्ध[12] ।

---

१ M drops वच्छिमा । कइमा । २ T and R add after it—'अत्र सर्वत्र डित्वाट्टिलोप । ३ इत्यधिकृत्य M, इत्यनुवर्तमाने T ४ इति च M, T ५ °रवर्णस्य उ स्यात् M, T, R ६ इत्यादिना युक्तस्य M, R ७ My and P drop स्वभावतोनुदन्तत्वाद्वा । ८ R has हे दक्षिणस्येत्यधिकृत्य after it ९ अज्ज । M, T १० इत्यधिकृत्य M, T ११ °दन्यस्यादे° M, T, R १२ सिध्यति T, R

[1]दीर्घाभावपक्षे जिहा। नात्र शेषत्वेपि हस्य द्वित्वम्। 'अह्रे' इति प्रतिषेधात्। इष्टाशब्दे 'मृष्टसन्दष्ट—' इत्यादिना [2]स्तोष्टत्वम्। इट्टा॥ [3]'त्वेदित' इत्यत 'एदित' इत्यनु[4]वर्तमाने

**मिरायां लित् ॥ १ । २ । ४२ ॥**

अत्र इत एत्व लित् स्यात्। मेरा। [5]सीमेति यावत्॥ स्थूणाशब्दे 'ओल्स्थूणातूण—' इति [7]वा ऊत ओत्वम्। [8]थोणा। पक्षे [6]थूणा। कृशाशब्दे 'वा मृदुत्वमृदुककृशास्वात्' इति ऋत आत्व वा। कासा। पक्षे अत्वम्। कसा। चपेटावेदनाशब्दयो '[10]चपेटा' इत्यादिना एचो वा इत्वम्। चविडा। चवेडा। विअणा। वेअणा। सिरविअणा। सिरवेअणा। इत्येतौ शिरोवेदनाया साध्यमानसिद्धावस्थयोरेव भवत ॥ यमुनाचामुण्डाशब्दयो 'कामुकयमुना—' इत्यादिना मकारस्य लुकि शेषस्य सानुनासिक उच्चार। यस्य ज। जउँणा। चाउँडा। चन्द्रि-काशब्दे 'पुन्नागभागिनी—' इत्यादिना कोर्मत्वम्। [11]चन्दिमा। चन्द्रिमा। [12]अत्र 'धात्रीदे रस्तु' इति वा [13]रेफलोप। छायाशब्दे 'यो जर्ती—' इत्यादे 'य' इत्यधिकृत्य

**छायायां होकान्तौ ॥ १ । ३ । ७० ॥**

अकान्तौ वर्तमाने छायाशब्दे यकारस्य हकारो वा स्यात्। इति वा हत्वे 'पुसोजातेर्डीव्वा' इत्यैत 'डीव् वा' इत्य[14]धिकृत्य

**हरिद्राच्छाया ॥ २ । २ । ३९ ॥**

---

१ दीर्घाभावे M My and P drop दीर्घाभावपक्षे २ सयुक्तस्य उत्वम् T, सयुक्तस्य एत्वम् R for स्तोष्टत्वम् ३ M has मिराशब्दे before it ४ इत्यनुवर्तमाने T R, इत्यनुवर्तते M ५ सीमा। My, P ६ थूणा My ७ M drop वा ८ M has 'कग—' इत्यादिना सलोप before थोणा T has 'कग—' इति सलोप before थोणा ९ 'इत्याभते स्यात् M १० 'चपेटाकेसरी—' इत्यादिना M, T ११ M drops चन्दिमा। चन्द्रिमा। १२ M drops अत्र १३ रेफस्य लोप। T १४ इत्यधिकृत्य M, T

अनयो ङीप् वा स्यात् । इति ङीपि अनुक्तमन्यन्यायेन 'यस्येति च' इत्यकारलोपे । छही । गौरीवत् । ङीनभावे । छाहा । हत्वाभावे । छाऊ । छाआ । उभयत्र थलोप ॥ हरिद्राशब्दे 'हरिद्रादौ' इति रेफस्य लत्वम् । 'मूषिकविभीतक—' इत्यादिना इत अत्वम् । युक्तरेफस्य वा लोप । द्वित्वम् । पूर्वसूत्रेण वा ङीप् । हॅळद्दी । हळद्दा । अत्र युक्तरेफलोपस्य विकल्पितत्वात् हॅळद्री । हळद्रा । इत्यप्यस्ति ॥ क्षुपाशब्दे 'शो सल्' इत्यत 'शो' इत्यधिकृत्य 'प्रत्यूपदिवसदशपापाणे तु ह' इत्यत. 'तु' इति च

जपायां ण्हः फोः ॥ १ । ३ । ८९ ॥

अत्र फो द्वितीयस्य शो ण्ह इत्यादेशस्तु स्यात् । सुण्हा । नात्र 'सौ' इत्युत ओत्वम् । बहुलाधिकारात् । पक्षे 'मनयाम्' इति नलोपे । सुसा । नन्वत्र पुरस्फूर्तिकत्वात् 'कग—' इति सलोप एव निमिति न भवति । उच्यते । अनुक्रमन्यन्यायेन विप्रतिपेधे परं कार्यमिति 'मनयाम्' इति सूत्रस्य परत्वान्नलोप एव युक्त इति सन्तोष्टव्यम् ॥ सुधाशब्दे 'छल्पट्टछमी—' इत्यादिना शोश्छत्वम् । छुहा । सिराशब्दे 'शो सल्' इत्यत 'शो' इत्यधिकृत्य 'छल्पट्टछमी—' इत्यादे 'छव' इति च

सिरायां वा ॥ १ । ३ । ९१ ॥

अत्र शोश्छत्वं वा स्यात् । छिरा । पक्षे सिरा ॥ स्पृहाशब्दे 'स्पृहादौ' इति युक्तस्य छत्वम् । कृपादित्वादत इत्वम् । छिहा ॥ श्रद्धाशब्दे 'द्धोर्धद्धि—' इत्यादिना युक्तस्य वा ह । सड्ढा । पक्षे सद्धा । दग्धाशब्दे 'दग्धविदग्ध—' इत्यादिना युक्तस्य ढत्वम् । 'विंशतिषु त्या ल्लोपल्' इत्यनेन विंशत्यादिपाठाद् बिन्दो ल्लोपलि शि-

---

१ डीप् M २ छाई M, T T has छाआ । छाइ । ३ हल्दि । M
४ हल्दि । M ५ इत्यधिकृत्य M, T ६ इति च M, T ७ युक्त T
८ इत्यधिकृत्य T

स्यात् पूर्वस्य दीर्घे दाढा । मन शिलाशब्दे चकारो मनस्विन्याद्यन्तर्गणपाठात् द्वितीयादच परे विन्दौ मणसिळा । मणासिळा इति च दृश्यते । श्लाघाशब्दे 'माङ्‌ श्लाघा—' इत्यादिना लात् भागत्वम् । घस्य हत्वम् । सळाहा ॥ क्रियाशब्दे 'हर्षामर्ष—' इत्यादिना युक्तस्यान्त्यहल प्रागित्वम् । किरिआ ॥ ज्याशब्दे 'ईल्‌ ज्यायाम्' इत्यनेनान्त्यहल प्रागील् । जीआ । सटाशब्दे 'ढ कैटभशकटसटे' इति टोर्ढत्वम् । सढा ॥ वनिताशब्दे

स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीदआविळआ वा ॥ १ । ३ । ९७ ॥

स्त्रीप्रमुखाना इत्थी प्रमुखा आदेशा वा स्युर्यथाक्रमम् ॥ विळआ । वनिता । विळया सस्कृतेपीति केचित् । इत्यादिविशेषा ऊह्या ॥ इकारान्त स्त्रीलिङ्गो रुचिशब्द । 'ह्लुगनपि सो' इति शो ह्लुक् । रुई । जसि 'शोशु स्त्रिया तु' इति शितावोदुतौ । रुईओ । रुईउ । पक्षे रुई । सम्बुद्धौ कविवत् । अमि रुइ । शसि जसवत् । 'टाङिङसाम्' इति शशा शिशे रुईअ इत्यादि । भिसि रुईहि । इत्यादि । जसौ उक्ता शादय । पथे हिनो इत्यादय । ङसि ङो च उक्ता आदेशा । ङौ मिङ् च । शेष कविवत् । एव मतिप्रभृतय ॥ विशेषास्तु बुद्धिशब्दे ऋत्यादिपाठाद्दत उत्वे 'दोघर्द्धि—' इत्यादिना युक्तस्य वा ढत्वे उढी । अस्त्येव कृपादिपाठाद्दत इत्वे इड्ढी । ढत्वाभावे । उद्धी । इद्धी ॥ आलीशब्दे 'हे दक्षिणेस्य' ईत्यत 'अस्य' इत्यधिकृत्य 'आदे' इति च

ओदाल्यां पङ्क्तौ ॥ १ । २ । २९ ॥

पङ्क्तिवाचिन्यालीशब्दे आदेरवर्णस्य ओत्वे स्यात् । ओळी । 'पङ्क्तौ'

---

१ M drops द्वितीयाद् २ इत्यपि My, P ३ M has द्वितीया before it ४ प्रागित्वम् । T ५ निआ । M ६ यथाक्रमं वा स्यु । T वा यथाक्रम स्यु ॥ M ७ ऊढ My ८ इत्यधिकृत्य R ९ ओत्व वा स्यात् T, R

इति किम् । आळी सखी ॥ मृत्तिशब्दे 'प्रवृत्तसन्दष्ट—' इत्यादिना त्तोऽट्टत्वम् । ऋत अत्वम् । मट्टी । छदिवितर्दो 'डल् फोर्मदित—' इत्यादिना त्तोऽर्डत्वम् । छड्डी । विअड्डी ॥ समृद्धिप्रृद्धिमतिसिध्यभिजातिषु तु 'समृध्यादौ' इति समृध्यादित्वादादेरचो वा दीर्घः । सामिद्धी । समिद्धी । अत्र कृपादित्वादृत इत्वम् । पासिद्धी । पसिद्धी । पाडिसिद्धी । पडिसिद्धी । अत्र प्रत्यादित्वात्तस्य डत्वम् । आहिआई । अहिआई । अत्र तजयोर्लोप । भस्य ह ॥ कृतिसृष्टिशब्दयो कृपादित्वादृत इत्वम् । किई । सिट्ठी । अत्र 'ष्ट' इति ष्टस्य ठत्वम् ॥ गृष्टिशब्दे वैकादित्वाद्बिन्दु । कृपादित्वादृत इत्व चे । गिंठी गिट्ठी इति च दृश्यते । प्रभृतिनिर्वृतिप्रवृत्तिवृद्धिषु ऋत्वादित्वादृत उत्वम् । पहुडि । पाहुडी । अत्र भस्य ह । प्रत्यादित्वाचस्य डत्वम् । समृध्यादित्वादादेरचो वा दीर्घ । भृति । भुई । निर्वृति । णिवुई । प्रवृत्ति । पउत्ती । वृद्धि । उड्ढी ॥ वितस्तिशब्दे 'ह कातर—' इत्यादिना तस्य हत्वम् । 'स्त' इति थत्वम् । विहत्थी ॥ वसतिशब्दे तु 'वसति भरते—' इत्यनेन तस्य हत्व वा स्यात् । वसही । पक्षे वसई ॥ पापर्धिशब्दे 'पो व' इत्यत 'प' इत्यनुवर्तते 'अखो' इति च

रत्पापर्धौ ॥ १ । ३ । ५८ ॥

अनाखो पस्य रत्व लित् स्यात् । पारद्धी । मृगया । धृतिशब्दे 'मलिनधृति—' इत्यादिना धृतिशब्दस्य वा दिहि इत्यादेशे दिही । पक्षे धिई ॥ शुक्तिशब्दे 'तिर्यक्पदाति—' इत्यादिना शुक्ते शिप्पि इत्यादेशे सिप्पी । पक्षे सुत्ती । बहुलाधिकाराचात्र 'स्तौ' इत्युत ओत्वम् । सोत्तीति केचित् । उभयत्र 'कग—' इति पलोपद्वित्वे ॥ सप्ततिशब्दे 'रत् सप्तत्यादौ' इति तस्य नित्य रत्वम् । सत्तरी । अत्र

१ युक्तस्य चत्वम् T युक्तस्य चत्वे एत्वम् R २ M has अभिजाति after it ३ चकादित्वादादिस्वराद्बिन्दु । M ४ M drops च ५ ह । T ६ समृद्ध्यादित्वाद्वा दीर्घ । M ७ स्तो थत्वम् M ८ तकारस्य My, P ९ वा हत्वम् । My, P M

'कग—' इति पलोपद्वित्वे । विंशति त्रिंशत् पञ्चाशत्—अत्र सर्वत्र 'विंशतिषु त्या श्लोपल्' इति बिन्दो 'ति' इत्यवयवेन सह लोपे शित्वात् सर्वस्य दीर्घे । वीसा । विंशति । तीसा त्रिंशत् । पञ्चाशत् । पण्णासा । अत्र 'पञ्चदशदत्तपञ्चाशति ण' इति णोर्णत्वम् । त्रयाणा रूपाणि जायावत् । सप्तविंशति पञ्चविंशति इत्यादौ 'दिहौ मिथ स' इति ह्रस्वस्य दीर्घे । सत्तावीसा । पण्णावीसा । शेष जायावत् ॥ अन्तर्वेदि । अत्र रेफलोपे पूर्ववद्दीर्घे । अतावेई ॥ ईकारान्त स्त्री लिङ्गो गौरीशब्द । 'ऐच एइ' इत्योत्वम् । गोरी सु इति स्थिते 'श्वि शि शिड् जश्शसो' इत्यत 'जश्शसो' इत्यधिकृत्य 'शो शु स्त्रिया तु' इत्यत 'स्त्रिया तु' इति च

## आदीतः सोश्च ॥ २ । २ । ३३ ॥

स्त्रियामीकारान्तान्नाम्न परस्य सो चकाराज्जश्शसोश्च आत्व तु भवति । गोरीआ । पक्षे सोर्लुक् । गोरी । जसि । गोरी । गोरीओ । गोरीउ । आत्वे । गोरीआ । सबुद्धौ 'ह्रस्वलीदूत' इति ह्रस्व । दे गोरि । शसि जस्वत् । टादौ टाङिङसाङसे शशाशिशे इत्यादि सर्वं रुचिशब्दवत् । एव तरुणीरमणीप्रभृतय ॥ स्त्रीशब्दस्य 'स्त्रीमगिनी—' इत्यादिना इत्थीत्यादेश । इत्थी ॥ श्रीशब्दस्य 'हर्षामर्ष—' इत्यादिना अन्त्यहल मागित्वम् । सिरी । एवं हिरी । अत्रापि 'क्विप' इति ह्रस्व । शेष गौरीवत् ॥ नीलीत्यादिषु

## पुंसोजातेर्ङीब् वा ॥ २ । २ । ३७ ॥

अजातिवाचिन पुलिङ्गात् स्त्रिया वर्तमानात् ङीप् प्रत्ययो वा स्यात् । नीली । पक्षे नीला । सहमाणी सहमाणा । सुप्पणही । सुप्पणहा । काळी । काळा । इत्यादि । 'अजातिवाचिन' किम् ।

---

१ पलोप M. २ इत्यधिकृत्य M, R, T ३ इति च । M, R, T ४ T drops शब्द ५ R and T drop रमणी ६ R and T drop एवम् ७ सुप्पणहा । सुप्पणही । M

इति किम् । आळी सखी ॥ वृत्तिशब्दे 'मवृत्तसन्दष्ट—' इत्यादिना त्तोऽष्टत्वम् । ऋत अत्वम् । मट्टी । छदिवितर्दो 'डल् फोर्मर्दित—' इत्यादिना त्तोर्डत्वम् । छड्डी । विअड्डी ॥ समृद्धिप्रवृद्धिप्रतिसिद्ध्यभिजातिषु तु 'समृद्ध्यादौ' इति समृद्ध्यादित्वादादेरचो वा दीर्घ । सामिद्धी । समिद्धी । अत्र कृपादित्वादृत इत्वम् । पासिद्धी । पसिद्धी । पाडिसिद्धी । पडिसिद्धी । अत्र प्रत्यादित्वात्तस्य डत्वम् । आहिआई । अहिआई[२] । अत्र तजयोर्लोप[३] । भस्य ह ॥ कृतिसृष्टिशब्दयो कृपादित्वादृत इत्वम् । किई । सिट्ठी । अत्र 'ष्ट' इति ष्टस्य ठत्वम् ॥ गृष्टिशब्दे वैकादित्वाद्बिन्दु । रूपादिरनादृत इत्व च[४] । गिंठी गिट्ठी इति च दृश्यते । प्रभृतिनिर्वृतिप्रवृत्तिवृद्धिषु ऋत्वादित्वादृत उत्वम् । पहुडि । पाहुडी । अत्र भस्य ह । प्रत्यादित्वात्तस्य डत्वम् । समृद्ध्यादित्वादादेरचो वा दीर्घ । भृति । भुई । निर्वृति । णिवुई । प्रवृत्ति । पउत्ती । वृद्धि । उड्डी ॥ वितस्तिशब्दे 'ह कातर—' इत्यादिना तस्य हत्वम् । 'स्त' इति थत्वम् । विहत्थी ॥ वसतिशब्दे तु 'वसतिभरते—' इत्यनेन तस्य हत्व वा स्यात् । वसही । पक्षे वसई ॥ पापर्धिशब्दे 'पो व' इत्यत 'प' इत्यनुवर्तते 'अखो' इति च

रत्पापर्धौ ॥ १ । ३ । ५८ ॥

अजादो पस्य रत्व लित् स्यात् । पारद्धी । मृगया । धृतिशब्दे 'मलिनधृति—' इत्यादिना धृतिशब्दस्य वा दिहि इत्यादेशे दिही । पक्षे धिई ॥ शुक्तिशब्दे 'तिर्यक्पदाति—' इत्यादिना शुक्ते शिप्पि इत्यादेशे सिप्पी । पक्षे सुत्ती । बहुलाधिकारादत्र 'स्तौ' इत्युत ओत्वम् । सोत्तीति केचित् । उभयत्र 'कग—' इति पलोपद्वित्वे ॥ सप्ततिशब्दे 'रल् सप्तत्यादो' इति तस्य नित्य रत्वम् । सत्तरी । अत्र

---

१ युक्तस्य उत्वम् T, युक्तस्य उत्वे एत्वम् R २ M has अभिजाति after it ३ वक्रादित्वादादिस्वराद्बिन्दु । M ४ M drops च ५ ढ । T ६ समृद्ध्यादित्वाद्वा दीर्घ । M ७ स्तो थत्वम् M ८ तकारस्य My P ९ वा हत्वम् । My, P, M

नाथस्य ज । पिमाजी ॥ हरीतकीशब्दे 'ईत फासगीर—' इत्यादिना थादेरीकारस्यात्वम् । मत्यादित्वात्तस्य वा डत्वम् । हरडई । डत्वाभावे हरअई । अत्र 'प्रायो लुक्—' इति तलोप ॥ गुडूचीशब्दे मुकुलादिपाठादादेरतोत्वम् । 'ओत्कूष्माण्डीतूण—' इत्यादिना ऊत ओत्वम् । गळोई ॥ भ्रुकुटीशब्दे 'रो भ्रुकुटीपुरुषयो —' इत्यनेन रेफसंबधिन उकारस्येत्व फलोपश्च डत्वम् । भिउडी ॥ कूष्माण्डीशब्दे 'ओत्कूष्माण्डीतूण—' इत्यादिना ऊत ओत्वे 'बाऽपे होऽश्रुणि' इत्यत 'ह' इत्यधिकृत्य

कूष्माण्ड्यां ण्डश्च तु लः ॥ १ । ४ । ६४ ॥

अत्र पुरुषस्य ह स्यात् तत्संनियोगेन ण्डस्य वा ल । फोहली । फोहण्डी ॥ ताम्बूलीशब्दे 'ओत्स्थूणा—' इत्यादिना ऊत ओत्वे 'स्वरस्य बिन्दुमि' इति ह्रस्वे तंबोली ॥ भागिनीशब्दे 'पुन्नागभागिनी—' इत्यादिना गोर्मत्वम् । भामिणी ॥ अतसीशब्दे 'दोहदमदीप—' इत्यादिना तस्य लत्वम् । अलसी ॥ कदलीशब्दे 'वेतस इति तो' इत्यतो 'तो' इत्यधिकृत्य 'रल् समत्यादौ' इत्यत 'रल्' इति च

अद्रुमे कदल्याम् ॥ १ । ३ । ४२ ॥

अद्रुमवाचिनि कदलीशब्दे तो रल भवति । करळी । 'अद्रुमे' इति किम् । कअळी ॥ बिसिनीशब्दे 'बो व' इत्यत 'ब' इत्यनुवर्तते ।

बिसिन्यां भः ॥ १ । ३ । ६३ ॥

अत्र बस्य भो भवति । भिसिणी ॥ नीवीशब्दे 'नीवीस्वप्ने वा' इति वकारस्य वा म । णीमी । पक्षे णीवी ॥ शमीशब्दे 'छल षट् छमी' इत्यादिना शोश्छत्वम् । छमी ॥ वाराणसीशब्दे 'ह्रश्च महाराष्ट्रेऽर्व्यत्यय' इत्यत 'व्यत्यय' इत्यधिकृत्य

१ डत्वाभावे तलोप । M, R and T २ M, R and T drop अत्र 'प्रायो लुक्—' इति तलोप । ३ मुकुलादित्वादा M ४ इत्यधिकृत्य M, R, T ५ इत्यधिकृत्य M ६ इति च M ७ इत्यनुवर्तते । M.

वाणारसीकरेण्वा रणोः ॥ १ । ४ । ११३ ॥

अत्र रेफणकारयोर्व्यत्ययः स्यात् । वाणारसी ॥ मनस्विनीशब्दे वक्रादौ मनस्विन्यादित्वाद् द्वितीयादच परो बिन्दु । वलोपे मणसिणी । समृद्ध्यादिपाठाद् विकल्पेन दीर्घे माणसिणी । उभयत्र 'लनराम्—' इति वलोप । शेषत्वेपि नात्र सकारस्य द्वित्वम् । अच परत्वाभावात् । न चानुक्तमन्यन्यायेन विप्रतिषेधे परं कार्यमिति न्यायेन परत्वाद् द्वित्वमेव युक्तम् । सामान्यविशेषयोर्विशेषो बलवानिति न्यायात् । बहुलाधिकाराद्वा बिन्दुरेव पूर्वमित्यलमतिप्रपञ्चेन ॥ तन्वीप्रभृतिषु 'क्ष्मारत्ने त्यहल' इत्यत 'अन्त्यहल' इत्यधिकृत्य 'अर्हत्सु च' इत्यत 'उं' इति च

तन्व्याभे ॥ १ । ४ । १०६ ॥

उकारान्तात् ङीमत्ययान्ता तन्व्याभा तेषु सयुक्तस्यान्त्यहल मागुत्वम् । तन्वी । तणुई । लघ्वी । लहुई । अत्र घस्य हत्वम् । गुर्वी । गरुई । मुकुलादित्वादुत अत्वम् । बह्वी । बहुई । मृद्वी । मउई । अत्र ऋतोत्वम् । पृथ्वी । पहुई । अत्रापि ऋतोत्वम् । थस्य हत्वम् । इत्याद्यूहनीयम् ॥ उकारान्त स्त्रीलिङ्गस्तनुशब्द । 'न' इति नस्य णत्वम् । तणू । 'शो. शु स्त्रिया तु' इति जश्शसोरोदुतौ । तणूउ । तणूओ । 'टाङिङसाम्' 'ङसे श शा शि शे' । इत्यादि । रुचिवत् । एव रज्जुधेनुप्रभृतय ॥ ऊकारान्त स्त्रीलिङ्गो जम्बूशब्द । सौ जबू । [illegible] । जबूओ । जबूउ । सबुद्धौ 'ह्रस्वलीदूत' इति ह्रस्व । [illegible] । इत्यादि । गौरीवत् । एव वधूचमूश्वश्रूयवागूप्रभृतय ॥ [illegible]शब्दे

[1] M, R and T drop वलोपे [2] °भतिप्रसङ्गेन । My, P, [3] इत्यधिकृत्य M [4] उदिति च M [5] M has अत्र before मुकुलादित्वा° [6] My, P, T, and R drop अत्र ऋतोत्वम् [7] °यूह्यम् My, P, M [8] तणूओ । तणूउ । M [9] My, P, and M drop श्वश्रूयवागू

वालाब्नरण्ये ॥ १ । २ । ४ ॥

'लुगव्यय—' इत्यादिना लुगनुवर्तते । 'आदे' इति च । अला ब्वरण्ययोरादेरचो लुग्वा स्यात् । इत्यादेरचो वा लुक् । लाबू अलाबू ॥ भ्रूशब्दे 'स्वार्थे तु कश्च' इत्यत 'स्वार्थे' इत्यधिकृत्य

डुमयडमयौल् भ्रुवः ॥ २ । १ । २५ ॥

भ्रूशब्दात् स्वार्थे उमय अमय इत्येतौ डितौ लितौ स्तः । रेफलोप । भुमय भमय इति स्थिते अनुक्तमन्यन्यायेन टाप् । भुमया भमया । इत्यादि । जायावत् ॥ करेणूशब्दे 'वाराणसीकरेण्वा रणो' इति रणोर्व्यत्यय । कणेरू । 'करेण्वाम्' इति स्त्रीलिङ्गनिर्देशादन्यत्र न भवति । एसो करेणू । इदुतोरीदूतोरन्येषां च 'स्वार्थे तु कश्च' इति कप्रत्यये जायावद्रूपम् ॥ ऋकारान्त स्त्रीलिङ्गो मातृशब्द । 'आर सुपि' इत्यत 'सुपि' इत्यधिकृत्य

मातुरा आरा ॥ २ । २ । ५० ॥

बहुलाधिकारज्जननीदेवतार्थयोर्मातृशब्दयो क्रमात् आ आरा इत्येतावादेशौ भवत सुपि परे ॥ माआ । माआरा । माआओ । माआराओ । इत्यादि । उभयत्र जायावत् ।

इदुन्मातु ॥ १ । २ । ८३ ॥

'ऋतोत्' इत्यत 'ऋत' इत्यनुवर्तते । अत ऋत इदुतौ भवत ॥ माई । माऊ । शेषमुभयत्र रुचिवत्तनुवच्च । सर्वत्र तलोप । यद्यपि 'इदुन्मातु' इत्यत्र 'गोणस्य' इत्यनुवर्तते तथापि क्वचिद्गौणस्यापि भवतीति त्रिविक्रमदेवेन माईणमिति प्रदर्शनाद्बहुलाधिकाराद्गौण-

---

१ इस्सतो M, R, T २ My, M, and P drop इत्यादेरचो वा लुक् । ३ इत्यधिकृत्य M, R, T ४ भवत T ५ इत्युभावादेशौ M इत्यनुवर्तते । M R ७ The portion from यद्यपि to मातृशब्दस्येदुतौ भवत is omitted in R and T ८ °द्गौणस्यापि हेमचन्द्रवचनादपि भवतीति शाखान्तरेऽपि वेदितव्य &c M

स्यापि भवतीति हेमचन्द्राचार्यवचनादपि केवलस्य मातृशब्दस्येदुतौ भवत ॥ स्वसृशब्दस्य विशेष ।

**स्वसृगाङ्डाल् ॥ २ । २ । ४१ ॥**

स्वस्रादे स्त्रिया डाल् स्यात् । ससा । णणदा ॥ दुहितृशब्दस्य 'स्त्रीभगिनी—' इत्यादिना वा दूआ इत्यादेश । दूआ । पक्षे दुहिआ । इत्यादि । जायावत् ॥ ओकारान्त स्त्रीलिङ्गो द्योशब्द । कप्रत्यय । जोआ । जोआओ । जायावत् ॥ गोशब्दस्य 'गव्यउदाइत्' इति अउत्वे गऊ । आइत्वे गाई । इत्यादि । तनुवद्धुचिवच्च ॥ रैशब्दे कप्रत्यय । 'ऐच एङ्' । रेआ । रेआओ । जायावत् ॥ नौ शब्दे

**नाव्यावः ॥ १ । २ । १०५ ॥**

'ऐच एङ्' इत्यत 'ऐच' इत्यनुवर्तते । अत्रैच आव इत्यादेशो भवति । टाप् । णावा । इत्यादि । जायावत् ॥

इत्यजन्तस्त्रीलिङ्गा ॥

---

## अथाजन्तनपुंसकलिङ्गाः ।

अकारान्तनपुंसकलिङ्गो वनशब्द । वन सु इति स्थिते 'स्लुगनपि सो' इत्यत 'सो' इत्यधिकृत्य

**मङ्लुगसबुद्धेर्नपः ॥ २ । २ । ३० ॥**

नपुंसकलिङ्गात् परस्य सोर्मकारो ङानुबन्धो लुक् च भवति । असबुद्धेरामन्त्रणार्थे न भवति । वंण । बहुलाधिकारादकारान्तेषु लुङ् न दृश्यते ॥ जश्शसो

**श्शिर्शिंशिङ्जश्शसोः ॥ २ । २ । ३१ ॥**

---

१ After this M has ङिति अकारो लित् स्यात् २ The heading is dropped in P and My ३ °लिङ्ग कुण्डशब्द M, R ४ कुण्ड for वन M, R, T ५ इत्यधिरत्य M, R ६ R drops च ७ कुड T

'नप' इत्यनुवर्तते । नपुसकलिङ्गात् परयो जश्शसो नि इ इ इति त्रय आदेशा भवन्ति । शानुबन्धत्वाद्दीर्घ । कुण्डाणि । कुडाइ । कुडाइ । वणानि । वणाइ । वणाइ । एव शस्यपि ॥ अन्यत्र रामवत् । एव सदनवदनप्रभृतय ॥ सर्वादो 'सर्वादेर्जसोतो डेत्' इत्यस्य पुँल्लिङ्ग विषयत्वात् ञिंशिंशिङ एव भवन्ति । सव्व । सव्वाणि । सव्वाइ । सव्वाइ । इत्यादि । शेष पुँल्लिङ्गसर्वशब्दवत् ।

अथ अकारान्तनपुसकलिङ्गेषु विशेषा प्रदर्श्यन्ते । पतिगृहम् । वेणुवनम् । शिलास्खलितम् । यमुनातटम् । वधूमुखम्—इत्यादिषु 'दिहो मिथ से' इति दीर्घह्रस्वयोरन्योन्यादेशे । पईघर । वेणूवण । दीर्घस्य ह्रस्व । सिळखलिअ । जेउणतड । वहुमुह । पक्षे । पइघर वहूमुह इत्यापि ॥ गुणदेवमण्डलाग्रकररुहवृक्षादीना 'क्लीबे गुणगा' इति यदा नपुसकता तदा धनवत् ॥ निर्माल्यशब्दे 'निष्प्रतीओत्—' इत्यादिना निर ओ इत्यादेश । 'सयोगे' इति ह्रस्व । ओमल्ल ॥ अरण्यशब्दे 'वालाब्वरण्ये' इत्यादेरचो वा लुक् । रण्ण । अरण्ण ॥ पक्कललाटयो । 'पक्काङ्गारललाटे तु' इत्यवर्णस्य वा इत्वे । पिक । पक्क । ललाटे 'लो फरवीरे ण' इत्यत 'लो' इत्यधिकृत्य

लो ललाटे च ॥ १ । ३ । ८१ ॥

अत्रादेर्लस्य णत्व भवति । णिलाट इति स्थिते 'टो ड' इति टस्य डत्वे 'ह्ध महाराष्ट्रे ह्रोर्व्यत्यय' इत्यत 'व्यत्यय' इत्यधिकृत्य

ललाटे डलोः ॥ १ । ४ । ११४ ॥

अत्र डकारलकारयोर्व्यत्यय स्यात् । णिडाल । इत्यामाने णडाल ॥ द्वारशब्दे 'उत्करवली—' इत्यादिना आदेरवर्णस्य वा एत्वे 'लन-राम्—' इति वलोपे । देर । दार । 'वा छद्म—' इत्यादिना वकाराद्

---

१ कुण्डानि M, R  २ M, R, and T drop वणानि । वणाइ । वणाइ ।  ३ M drops शब्द  ४ नपुसके R, T  ५ जउणअ M  ६ उण्डघत् M, R, T  ७ इत्यधिकृत्य M R  ८ इत्यधिकृत्य M, R, T

प्रागुत्वे । दुवार । तद्वैव च वलोपे । दुआरं । 'कग—' इति दलोपे । वार । नेरमित्यपि ॥ आर्द्रशब्दे 'हे दक्षिणेस्य' इत्यत 'अस्य' इत्यधिकृत्य

त्वार्द्रे उदोत् ॥ १ । २ । २७ ॥

आर्द्रशब्दे आदेरवर्णस्य उत्त्वमोत्त्व च वा भवत । आर्द्र । उद्र । ओद्र । इति स्थिते 'लो वार्द्रे' 'स्तो' इत्यनुवर्तते । अत्र स्तोर्लो वा स्यात् इति वा लत्वे रेफलोपे शेपस्य द्वित्वे 'सयोगे' इति ह्रस्वे च । अल्ल । उल्ल । ओल्ल । ल्त्वाभावे । अद्द । उद्द । ओद्द ॥ स्त्यानशब्दे 'ईल्लल्वाट—' इत्यादिना अकारस्य ईत्वम् । 'स्त्यानचतुर्थे—' इत्यादिना स्तस्य वा ठत्वम् । ठीण । ठत्वाभावे 'स्थोम्पन्दे' इत्यनुवर्तमाने एतत्सूत्रे चकारानुकृष्ट थत्वम् । थीण । दैवादित्वाद् द्वित्वे थिण्ण ॥ तालवृन्ते उत्खातादिपाठादाकारस्य विकल्पेन ह्रस्वे तलवृन्त तालवृन्त इति स्थिते 'ऋतोत्' इत्यधिकृत्य

वृन्त इदेद्व ॥ १ । २ । ८७ ॥

अत्र ऋत इदेतौ वा भवत । 'टल् त्रसरवृन्त—' इत्यादिना तस्य टत्वम् । तलविंट । तलवेंट । तालविंट । तालवेंट ॥ 'सयोगे' इत्यधिकृत्य

त्वेदितः ॥ १ । २ । ४१ ॥

इत आदेरिकारस्य सयोगे परे वा एकार स्यात् । धेम्मेल्ल । धम्मिल्ल । सेंदूर । सिंदूर । पेंड । पिंड । इत्यादि ॥ क्षुतशब्दे 'स्वदुत उपरि गुरुके' इत्यत 'उत' इत्यधिकृत्य

क्षुत ईत् ॥ १ । २ । ६१ ॥

---

१ इत्यधिकृत्य M, R २ आर्द्रो M ३ उद्दा M ४ ओर्द्रं M. ५ M and R drop च ६ तालविंट is dropped in P, R, T, My ७ धमेल्ल । धमिल्ल My ८ क्षुते M ९ इत्यधिकृत्य M.

'नः' इत्यनुवर्तते । नपुंसकलिङ्गात् जश्शसो उदन्तो णिः इति णय आदेशा भवति । णानुबन्धाद्दीर्घः । कुण्डाणि । कुण्ड । कुण्डाइ । वणाणि । वणाइं । वणाइ । एवं दासादि ॥ अपरे तु एव शब्दनपुंसकमनुसरन्ति ॥ सर्वादौ 'सर्वादेर्जसो डे' इत्यत्र पुंलिङ्गविषयत्वात् क्लीबलिङ्गे णय भवन्ति । सव्व । सव्वाणि । सव्वइं । सव्वाइ । इत्यादि । शेषं पुंलिङ्गसर्वशब्दवत् ।

अथ अकारान्तनपुंसकलिङ्गेषु विशेषा प्रदर्श्यन्ते । पङ्कजम् । वेणुवनम् । निलम्नलिन‍म् । यमुनातटम् । वधूमुखम्—इत्यादिषु 'दीर्घस्य मिथः से' इति दीर्घह्रस्वयोर्यथादर्शं । पङ्कयं । वेणुवणं । दीर्घस्य ह्रस्व । निलम्नलिणं । जउणयडं । वहुमुहं । पक्षे । पङ्कयं वहुमुहं इत्यादयपि ॥ गुणदेवमण्डलाग्रकरसद्दमादीनां 'क्लीबे गुणगा' इति यदा पुंस्त्वम् तदा देववत् ॥ निर्माल्यशब्दे 'निष्प्रती ओत्—' इत्यादिना निरो ओ इत्यादेश । 'संयोगे' इति ह्रस्व । ओमल्ल ॥ अरण्यशब्दे 'बालाब्व्यरण्ये' इत्यादेरचो वा लुक् । रण्ण । अरण्ण ॥ पक्षललाटयो । 'पक्षाङ्गारललाटे तु' इत्यवर्णस्य वा इत्वे । पिक्ख । पक्ख । ललाटे 'लो णवीरे ण' इत्यत 'लो' इत्यधिकृत्य

लो ललाटे च ॥ १ । ३ । ८१ ॥

अनादेर्लस्य णत्वं भवति । णिलाट इति स्थिते 'टो ड' इति टस्य डत्वे 'डश्च महाराष्ट्रे डोर्व्यत्यय' इत्यत 'व्यत्यय' इत्यधिकृत्य

ललाटे डलो ॥ १ । ४ । ११४ ॥

अत्र डकारलकारयोर्व्यत्यय स्यात् । णिडाल । इत्वाभावे णडाल ॥ द्वारशब्दे 'उत्करवल्ली—' इत्यादिना आदेरवर्णस्य वा एत्वे 'लव राम्—' इति वलोपे । देरं । दारं । 'वा छद्म—' इत्यादिना वकारागत्

१ कुण्डाणि M, R  २ M, R, and T drop वणाणि । वणाइं । वणाइ ।  ३ M drops शब्द  ४ °नपुंसक R, T  ५ जउणअड M, R, T  ६ कुण्डवन् M, R, T  ७ इत्यधिकृत्य M, R  ८ इत्यधिकृत्य M,

एपु ऋत आद्वा स्यात् । इत्यतो वा आत्वे माउक्क । पक्षे अत्वम् । मउक्क । कत्वाभावे 'त्वस्स तु डिमात्तणौ' इति त्वस्य वा त्तणादेशे । माउत्तण । मउत्तण । तणाभावे । माउत्त । मउत्त । अत्र सर्वत्र दलोप ॥ पत्तनशब्दे 'प्रवृत्तसदष्ट—' इत्यादिना त्तोष्टत्वम् । पट्टण ॥ प्रवृत्तशब्दे पूर्वसूत्रेणैव त्तोष्टत्वम् । पवट्ट । अत्र 'ऋतोत्' इत्यत्व च । आश्चर्यशब्दे 'र्ये सौकुमार्ये—' इत्यादिना 'र्ये' इत्यनुवर्तमाने

अररिअरिज्ञमाश्चर्ये ॥ १ । ४ । ५६ ॥

अत्र र्यस्य अर रिअ रिज्ज इति त्रय आदेशा भवन्ति । अच्छअरं । अच्छरिअ । अच्छरिज्ज ॥ श्मशानशब्दे 'शोर्लुक् सो —'इत्यादिना शोलोपे । मसाण ॥ सरोरुहशब्दे 'त्वसरोरुह—'इत्यादिना एचो वा अत्वम् । सररुह । सरोरुह ॥ अन्योन्यशब्देप्येवम् । अण्णण्ण । अण्णोण्ण ॥ कालायसकिसलयहृदयशब्देपु 'क्योर्दनुज—'इत्यादिना यकारस्य साच्कस्य वा लोपे । कालास । कालाअस । किसल । किसलअ । हिअ । हिअअ ॥ चत्वरशब्दे 'च क्वचित्त्वरे' इति त्तोश्चत्वम् । चच्चर ॥ सैन्यशब्दे 'चपेटकेसरदेवर—' इत्यादिना एचो वा इत्वम् । सिण्ण । सेण्ण । दैवादिपाठात् सइण्ण ॥ चिह्नशब्दे 'वा न्तन्धौ मन्युचिह्नयो' इत्यनेन वा न्धादेशे । चिन्ध । पक्षे 'श्नष्ण—'इत्यादिना ण्हादेशे । चिण्ह । इन्ध । इण्ह । इत्यप्यस्ति । बहुलाधिकारात् कचिदादेरपि चस्य लोप ॥ मलिनशब्दे[13] 'मलिनधृति—'इत्यादिना मलिनशब्दस्य वा मइलादेशे । मइल । पक्षे मलिण ॥ वैडूर्यशब्दे[14] अनेनैव[15]

१ इत्यनुवतते M, R २ राजकुलभाजनशालायस R, T ३ हृदयेषु M, R ४ M has अत्र before 'ज्यार्दनु॰' ५ After this R has क्योर्वा लोपे राउर । रामउरं । माण । भाअण ६ चत्वरे M, R ७ त्तुन्चम् M ८ 'केसर–' इत्यादिना M ९ इत् M १० ण्हादेश M, T ११ अत्र बहुला॰ T १२ M and T have प्रायो उट् before क्वचिदादेरपि १३ T has वैडूयशब्दे च after this १४ T drops वैडूर्यशब्दे, M has वैडूर्यशब्दस्य १५ M drops अनेनैव

अत्रोत ईत्वं भवति । स्पृहादित्वात् क्षस्य छ । छीअ ॥ 'सूक्ष्मे द्वोत ' इत्यत 'ऊत ' इत्यधिकृत्य

अल् दुकूले ॥ १ । २ । ६८ ॥

अत्र ऊत अलित्यादेशो वा । लकारो नानुबन्ध । कलोप । दुअल्ल । अत्रादेशलकारस्सभावल्कारयोर्मेलनाद् द्वित्वम् । पक्षे दुऊल ॥ 'उदत्कण्डूय—' इत्यत 'उद्' इत्यनुवर्तमाने 'ऊत ' इति च

वा मधूके ॥ १ । २ । ७१ ॥

अत्र ऊत उत्व वा स्यात् । धस्य ह । महुअ । पक्षे महूअ ।

इदेन्नूपुरे ॥ १ । २ । ७२ ॥

'ऊत ' इत्यनुवर्तते । अत्र ऊत इदेतौ वा भवत । णिउर । णेउर । पक्षे णोउर । अत्र सर्वत्र पलोप ॥ 'ऋतोत्' इत्यत 'ऋत ' इत्यधिकृत्य 'उदृषभे वु ' इत्यत 'उत' इति च

गौणान्त्यस्य ॥ १ । २ । ८२ ॥

गौणपदस्य योन्त्य ऋत् तस्य उद्भवति । मातृमुदितम् । माउमुइअ । मातृगृहम् । माउघर । पितृकुलम् । पिउकुळ । इत्यादि ॥ लवणशब्दे 'तु मयूर—' इत्यादिना आदेरच परेण साञ्झलो सह वा ओत्वे लोण । लवण ॥ उलूखलेऽपि पूर्ववत् । ओहलो । उऊहळ ॥ मृदुत्वशब्दे 'क शक्त—' इत्यादिना युक्तस्य वा कत्वे 'ऋतोत्' इत्यत्र 'ऋत ' इत्यधिकृत्य

आद्वा मृदुत्वमृदुककृशासु ॥ १ । २ । ७५ ॥

---

१ इद्वा स्यात् R, T २ सयुक्तस्य छत्वम् for क्षस्य छ । R ३ R and T have पक्षे दुऊल after it ४ इत्यनुवर्तमाने M ५ वा स्यात् M ६ M drops पक्षे ७ M and R drop पक्षे णोउर ८ इत्यधिकृत्य M R ९ माउमुइअ । मातृमुदितम् । माउघरं । मातृगृहम् । पिउकुळ । पितृकुलम् । My P १० M has बहुलम् after पूर्ववत् ११ मृदुत्वेM, R, T १२ इत्यधिकृत्य M

इत्यादि दधिवत् ॥ गोशब्दस्य साध्यावस्थापेक्षया अउ आइ इत्यादे-शयो उवगउ । उवगोइ । इत्यादि मधुवद्दधिवच्च ॥ औकारान्तनपुंस-कलिङ्गोऽतिनौ शब्द । अनुक्रमन्यन्यायेन ह्रस्वादि पूर्ववल्लोप । अइणु । इत्यादि । पक्षे 'नाव्याव' इत्यावादेशे अइणाव अइणावाणि । इत्यादि कुण्डवत् ॥

## इत्यजन्ता नपुंसकलिङ्गाः ॥

---

क्तप्रत्ययान्ते विशेष । 'अदेल्लुक्यादेरत' इत्यत 'अत' इत्य-धिकृत्य 'मोमम्व्विच' इत्यत 'इत्' इति च

क्ते ॥ २ । ४ । १७ ॥

क्तप्रत्यये परे अत इत् स्यात् । हसिअ । पडिट्ठिअ । इत्यादि । णअ गअ इत्यादि तु सिद्धावस्थापेक्षया । अत इत्येव । जाअ । लुअ । भूअ । इत्याद्यूह्यम् ॥ ण्यन्तक्ते तु

लुगाविल्भावकर्मक्ते ॥ २ । ४ । १३ ॥

'णिजदेदावावे' इत्यत 'णिच्' अनुवर्तते । भावकर्मविहिते क्तप्रत्यये परे णिचो वा लुक् आविल्यादेशश्च वा भवति । लित्वान्नित्यम् । कारिअ । काराविअ । हासिअ । हासाविअ । इत्याद्यूह्यम् ॥

---

## अथ हलन्ताः ॥

हकारान्त पुंलिङ्गो गोधुक्शब्द । गोदुह् सु इति स्थिते

---

१ इत्यादेशे M २ उवगउ before उवगउ M ३ उवगाइ after उवगाइ M ४ M has अइणु after this ५ इत्यधिकृत्य M, R, T ६ इति च M ७ इत् R, T ८ पन्जिअ । कारिअ M, T ९ इत्यादिषु M १० सिद्धावस्थाया for सिद्धावस्थापेक्षया R, T ११ भाव-कर्मविहिते is dropped in P and My १२ °त्यादेश वाप्नोति M, T °त्यादेशो चाप्नोति R १३ °ह्यम् P, My

वेरुलि आदेशे[1] वेरलिअ। पक्षे वेडुज्ज। इत्यादि ऊहनीयम्[2]॥ आकारान्तनपुंसकलिङ्गः सोमपाशब्दः। 'क्विप' इति ह्रस्वः। शेषं पुंलिङ्गसोमपाशब्दवत्॥ इकारान्तनपुंसकलिङ्गो दधिशब्दः। दधि सु इति स्थिते 'मद्‌लुगसवुद्धेर्नप' इत्यनेन सोर्मद्‌लुक् च। ञित्वात् सानुनासिक उच्चारः। दहिँ। दहिं। सिद्धावस्थापेक्षया दहि इत्यपि भवति। जश्शसोश्शिश्शिमान्य। दहीणि। दहीइ। दहीइँ। दे दहि। इत्यादि। शेषं पुंलिङ्गकानिवत्। एवं वारिप्रभृतयः॥ अस्थिशब्दे 'विसंस्थुलास्थि—'इत्यादिना युक्तस्य ठत्वम्। वक्रादित्वाद् बिन्दुः[3]। अट्ठिं। अन्यत् दधिवत्॥ अक्षिशब्दस्य स्पृहादित्वात् क्षस्य छत्वम्। अच्छिं। दधिवत्॥ द्विनिशब्दयोर्लिङ्गत्रयेपि समानं रूपम्॥ ग्रामणीशब्दे 'क्विप' इति ह्रस्वः। गामणिं। इत्यादि। दधिवत्॥ उकारान्तनपुंसकलिङ्गो मधुशब्दः। प्रथमाद्वितीययोर्दधिवत्। सिद्धावस्थापेक्षया महु इति च भवति[4]। अन्यत्र पुंलिङ्गकारुवत्॥ बिन्दुशब्दस्य गुणादिपाठात् 'क्लीबे गुणगा'[5] इति वा नपुंसकत्वे मधुवत्॥ श्मश्रुशब्दे 'शोर्लेः स्सो —' इत्यादिना शोर्लोपः। वक्रादित्वाद्बिन्दुः। मंसु। इत्यादि[6] मधुवत्॥ खलपूशब्दे ह्रस्वः। खलपु। भिसादौ पुनर्दीर्घः। खलपूनि इत्यादि मधुवत्। एवं कण्डूप्रभृतयः॥ ऋकारान्तनपुंसकलिङ्गः कर्तृशब्दः। 'आरः सुपि' इत्यारादेशः। कत्तारं। कत्ताराणि इत्याद्यारादेशे कुण्डवत्। 'उद्वृता स्वसमासे' इत्युत्वे कत्तूणि इत्याद्युत्वपक्षे मधुवत्। समासे तु आर एव॥ ओकारान्तनपुंसकलिङ्ग उपगोशब्दः। सिद्धावस्थापेक्षया उवउं। उवऊ। इत्यादि मधुवत्॥ ऐकारान्तनपुंसकलिङ्गोऽतिरैशब्दः। अनुक्तमन्यन्यायेन। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'एच इग्घ्रस्वादेशे' इति एच इक्। तलोपः। अइरिं। अइरीणि।

---

[1] T has वेडूर्यस्य after आदेशे [2] °मूह्यम् M, R, T [3] M and R drop वक्रादित्वाद्बिन्दु [4] इस्यते R [5] M and R drop क्लीबे गुणगा [6] M and R have बिन्दु इत्यादि before मधुवत् [7] M has आन्स्वरात् before बिन्दु

इत्यादि दधिवत् ॥ गोशब्दस्य साध्यावस्थापेक्षया अउ आइ इत्यादेशयो[1] उवगउ । उवगाइ । इत्यादि मधुवद्दधिवच्च ॥ औकारान्तनपुंसकलिङ्गोतिनौ शब्दः । अनुक्रमन्यन्यायेन हृस्वादि पूर्ववल्लोप । अइणु । इत्यादि । पक्षे 'नाव्याव' इत्यावादेशे अइणाव अइणावाणि । इत्यादि कुण्डवत् ॥

## इत्यजन्ता नपुंसकलिङ्गाः ॥

---

क्तप्रत्ययान्ते विशेष । 'अदेल्लुक्यादेरत ' इत्यत 'अत ' इत्यधिकृत्य 'मोमम्पुर्व्विच' इत्यंत 'इत्' इति च

क्ते ॥ २ । ४ । १७ ॥

क्तप्रत्यये परे अत इत्व स्यात् । हसिअ । पडिहिअ । इत्यादि । णअ गअ इत्यादि तु सिद्धावस्थापेक्षया । अत इत्येव । जाअ । लअ । भूअ । इत्याद्यूह्यम् ॥ ण्यन्तक्ते तु

लुगाविल्भावकर्मक्ते ॥ २ । ४ । १३ ॥

'णिजदेदावावे' इत्यत 'णिच्' अनुवर्तते । भावकर्मविहिते क्तप्रत्यये परे णिचो वा लुक् आविलित्यादेशश्च वा भवति । लित्वान्नित्यम् । कारिअ । काराविअ । हासिअ । हासाविअ । इत्याद्यूह्यम् ॥

---

## अथ हलन्ताः ॥

हकारान्त पुलिङ्गो गोधुक्शब्दः । गोदुह् सु इति स्थिते

---

1 इत्यादेशे M 2 उवगउ before उवगउ M 3 उवगाइ after उवगाइ M 4 M has अइणु after this 5 इत्यधिकृत्य M, R, T 6 इति च M 7 इत् R, T 8 पडिअ । कारिअ M, T. 9 इत्यादिषु M 10 सिद्धावस्थाया for सिद्धावस्थापेक्षया R, T 11 कर्मविहिते is dropped in P and My 12 °त्यादेश T °त्यदेशो 13 °ह्यम् P, My

वेरलि आदे[1]शे वेरलिअ । पक्षे वेडुज्ज । इत्या[2]द्यूह्नीयम् ॥ आकारान्तन पुसकलिङ्ग सोमपाशब्द । 'क्विप' इति ह्रस्व । शेष पुलिङ्गसोमपाश ब्दवत् ॥ इकारान्तनपुसकलिङ्गो दधिशब्द । दधि सु इति स्थिते 'मड्लुगसबुद्धेर्नप' इत्यनेन सोर्मड्लुकृ च । डित्वात् सानुना सिक उच्चार । दहि । दहिँ । सिद्धावस्थापेक्षया दहि इत्यपि भवति । जश्शसोश्शिशिमादय । दहीणि । दहीइ । दहीइँ । दे दहि । इत्यादि । शेष पुलिङ्गकविवत् । एव वारिप्रभृतय ॥ अस्थिशब्दे 'विसस्थुलास्थि—'इत्यादिना युक्तस्य ट्ठत्वम् । वं[3]कादित्वाद् बिन्दु । अट्ठिं । अन्यत्र दधिवत् ॥ अक्षिशब्दस्य स्पृष्टादित्वात् क्षस्य च्छत्वम् । अच्छिं । दधिवत् ॥ द्विनिशब्दयोर्लिङ्गत्रयेपि समान रूपम् ॥ ग्रामणी शब्दे 'क्विप' इति ह्रस्व । गामणिं । इत्यादि । दधिवत् ॥ उकारान्त नपुसकलिङ्गो मधुशब्द । प्रथमाद्वितीययोर्दधिवत् । सिद्धावस्थापेक्षया महु इति च भ[4]वति । अन्यत्र पुलिङ्गकारवत् ॥ बिंदशब्दस्य गुणादिपाठात् 'ह्वीने[5] गुणगा' इति वा नपुसकत्वे [6]मधुवत् ॥ श्मश्रुशब्दे 'शोर्लुक्श्मो—' इत्यादिना शोर्लुक् । वं[7]कादित्वाद्बिन्दु । मसु । इत्यादि मधुवत् ॥ खलपूशब्दे ह्रस्व । खलवु । श्शिमादौ पुनर्दीर्घ । खलवूनि इत्यादि मधुवत् । एव काण्डलूप्रभृतय ॥ ऋकारान्तनपुसकलिङ्ग कर्तृशब्द । 'आर सुपि' इत्यारादेश । कत्तार । कत्ताराणि इत्याद्यारादेशे कुण्ड- वत् । 'उद्दता त्वस्यमामि' इत्युत्वे कत्तूनि इत्याद्युत्वपक्षे मधुवत् । स्यमामि तु आर एव ॥ ओकारान्तनपुसकलिङ्ग उपगोशब्द । सिद्धा- वस्थापेक्षया उवउ । उवऊ । इत्यादि मधुवत् ॥ ऐकारान्तनपुसकलिङ्गो- तिरैशब्द । अनुक्तमन्यन्यायेन । 'ह्रस्वो नपुसके प्रातिपदिकस्य' इति ह्रस्वे 'एच इग्घ्रस्वादेशे' इति एच इक् । तलोप । अइरिं । अइरीणि ।

---

१ T has वेडुयस्य after आदेशे  २ °धूह्यम् M, R, T  ३ M and R drop वंकादित्वाद्बिन्दु  ४ दृश्यते R  ५ M and R drop ह्वीवे गुणगा  ६ M and R have बिन्दु इत्यादि before मधुवत्  ७ M has आदित्वात् before बिन्दु

इत्यादि । रामवत् । एवं प्रतामादय ॥ किंशब्दस्य तु भेद । 'क्वचित्सुपि तदो ण' [1]इत्यत 'सुपि' इत्यधिकृत्य

त्रतसि च किमो क्कः ॥ २ । २ । ७५ ॥

किंशब्दस्य त्रतसो सुपि च परे क इत्यादेशो लित् स्यात् । 'सो' इत्योत्वम् । को । सर्वनामत्वाज्जस एत्वम् । के । शसि सर्ववत् । टा

इदमेतत्कियत्तद्भ्यष्टो [2]डिणा ॥ २ । २ । ७३ ॥

'अनिदमेतदस्तु कियत्तद्भ्य स्त्रियामपि हि' इत्यतो मण्डूकप्लुतिन्यायेन 'तु' [3]इत्यनुवर्तते । एभ्य सर्वादिभ्योदन्तेभ्य परस्य टावचनस्य इणा इति डिद्वा स्यात् । किणा । केण । केण । भिसि सर्ववत् । ङसौ

म्हा ङसेः ॥ २ । २ । ७० ॥

'अनिदमेतद्—' इत्यादे 'कियत्तद्भ्य' इत्यनुवर्तते 'तु' इति च । कियत्तद्भ्य परस्य ङसे म्हा इत्यादेशो वा [7]स्यात् । कम्हा । पक्षे सर्ववत् ।

किमो डीसडिणो ॥ २ । २ । ७१ ॥

'ङमे' इत्यनुवर्तते । किम परस्य ङसे ईस इणो इत्यादेशौ डितौ वा भवत । कीस । क्रिणो । पक्षे सर्ववत् । ङसि 'कियत्तद्भ्य सश्' इत्यत 'सश्' इत्यधिकृत्य

कियत्तद्भ्यो ङस् ॥ २ । २ । ६७ ॥

ङस् इति विभक्तिव्यत्ययेन षष्ठी । एभ्य परस्य ङस सश् वा भवति । कास । पक्षे कस्स । आमि 'आमा डेसिं' इति वा डेसिमादेश । केसिं । पक्षे

कियत्तद्भ्यः सश् ॥ २ । २ । ६६ ॥

---

१ इत्यधिकृत्य M, R T  २ दिणा M  ३ इत्यनुवर्तमाने My, P
४ भवति M  ५ ङसी M  ६ ङसी M  ७ स्यात् M, R  ८ शसी M

**हलोक् ॥ २ । ४ । ६९ ॥**

धातोरन्त्यस्य हलः परे अगागमः स्यात् । इत्यगागमे । गोदुहो । गोदुहा । इत्यादि । रामवत् । एवमनडुहप्रभृतयः ॥ यकारान्तोऽप्रसिद्धः । वकारान्तः पुल्लिङ्गो सुदिव्शब्दः । वकारस्य 'अन्त्यहलोऽश्रदुदि' इति लोपः । धातुत्वाभावादगागमो न भवति । कप्रत्ययः । सुदिओ । सुदिआ । इत्यादि । रामवत् । भिस्भ्यस्सुप्सु 'दिव उत्' इत्युत्वे कृते सिद्धावस्थापेक्षया सुसु इत्यस्य यस्य 'र्यो जः' इति जत्वे । सुज्जू । सुज्जूसुतो । सुज्जूसु । इत्यादि । कारवत् । अत्र धातुत्वाधातुत्वविवेकस्तु प्रायोगिकः । धातुत्वपक्षे अगागमः । अन्यत्र कप्रत्ययः ॥ रेफान्तः पुल्लिङ्गः सुगिर्शब्दः । अगागमः । सुगिरो । सुगिरा । इत्यादि रामवत् । एवं सुधुरसुपुरप्रभृतयः ॥ चतुरशब्दस्य

**चतुरो जश्शस्भ्यां चउरो चत्तारो चत्तारि ॥ २ । ३ । २८ ॥**

चतुरशब्दस्य जश्शस्भ्यां सह चउरो चत्तारो चत्तारि इति त्रय आदेशा भवन्ति । जसि चउरो चत्तारो चत्तारि । शसि तान्येव । अन्यत्र भिसादिष्वन्त्यहलो लोपे 'भिस्भ्यस्सुपि' इत्यधिकृत्य 'इदुतोर्दिः' इत्यतो 'दिः' इति च

**चतुरो वा ॥ २ । २ । २३ ॥**

उदन्तस्य चतुरशब्दस्य भिस्भ्यस्सुपि परे वा दीर्घः स्यात् । चउहिं । चऊहिं । चउहिंतो । चऊहिंतो । एवं त्तो दो दुः सुतो च । चउसु । चऊसु । इत्यादि । आमि 'ण्हण् संख्यायाः—' इत्यादिना ण्हण्ह । चउण्ह । चउण्ह । शेषं कारवत् ॥ मकारान्तः पुल्लिङ्गः प्रशाम्शब्दः । 'हलोक्' इत्यगागमः । शो सत्वम् । पसामो । पसामा ।

---

१ °रन्त्यहल R, T  २ परे P  ३ °शब्द T  ४ कृते is dropped in T, My, P  ५ जत्वे कृते M  ६ M omits धातुत्वपक्षे—कप्रत्ययः ।  ७ M omits चतुरशब्दस्य  ८ चउण्ह चउण्ह M

इत्यादि । रामवत् । एव प्रतामादय ॥ किंशब्दस्य तु भेद । 'क्वचित्सुपि तदो ण ' इत्यत 'सुपि' इत्यधिकृत्य

**त्रतसि च किमो त्कः ॥ २ । २ । ७५ ॥**

किंशब्दस्य त्रतसो सुपि च परे क इत्यादेशो लित् स्यात् । 'सो' इत्योत्वम् । को । सर्वनामत्वाज्जस एत्वम् । के । शसि सर्ववत् । टा

**इदमेतत्किंयत्तद्भ्यष्टो डिणा ॥ २ । २ । ७२ ॥**

'अनिदमेतदस्तु कियत्तद्भ्य स्त्रियामपि हि' इत्यतो मण्डूकप्लुतिन्यायेन 'तु' इत्यनुवर्तते । एभ्य सर्वादिभ्योदन्तेभ्य परस्य टावचनस्य इणा इति डित्वा स्यात् । किणा । केण । केण । भिसि सर्ववत् । ङसौ

**म्हा ङसेः ॥ २ । २ । ७० ॥**

'अनिदमेतद्—' इत्यादे 'किंयत्तद्भ्य' इत्यनुवर्तते 'तु' इति च । किंयत्तद्भ्य परस्य ङसे म्हा इत्यादेशो वा स्यात् । कम्हा । पक्षे सर्ववत् ।

**किमो डीसडिणो ॥ २ । २ । ७१ ॥**

'ङसे ' इत्यनुवर्तते । किम परस्य ङसे ईस इणो इत्यादेशौ डितौ वा भवत । कीस । किणो । पक्षे सर्ववत् । ङसि 'किंयत्तद्भ्य सश्' इत्यत 'सश्' इत्यधिकृत्य

**किंयत्तद्भ्यो ङेस् ॥ २ । २ । ६७ ॥**

ङेस् इति विभक्तिव्यत्ययेन षष्ठी । एभ्य परस्य ङस सश् वा भवति । कास । पक्षे कम्स । आमि 'आमा ङेसिं' इति वा ङेसिमादेश । केसिं । पक्षे

**किंयत्तद्भ्यः सश् ॥ २ । २ । ६६ ॥**

---

१ इत्यधिकृत्य M R T २ डिणा M ३ इत्यनुवर्तमाने My , P ४ भवति M ५ ङसो M ६ ङसो M ७ स्यात् M , R ८ शसो M

'आम्' इत्यनुवर्तते। डस्य परस्य आम डित् सकारो वा स्यात्। कास। पक्षे गनेवत्। केण। काण। टौ 'डेस्त्थर्हिस्सिम्मि'। कत्थ। कस्सिं। कम्मि। 'अनिदमेतद्—' इत्यादिना वा हिं च। कहिं। शेषं निर्णेय।

डिगिआडाहेडाला काले ॥ २। २। ६९ ॥

किंयत्तद्भ्यः परो ङि इआ इत्यादेशः आहे आला इत्येतौ डि-तौ चापद्यते वा कालेऽभिधेये। कइआ। काहे। काला। कदेत्यर्थः। एवं यत्तदोरप्येते आदेशाः कालेऽभिधेये। शेषं सर्ववत् ॥ इद-शब्दस्य तु इदम् स् इति स्थिते 'क्वचित् सुपि तदो ण' इत्यत 'सुपि' इत्यधिकृत्य

इदम इमः ॥ २। २। ७६ ॥

इदंशब्दस्य इम इत्यादेशो भवति सुपि परे। इमो ॥

पुंसि सुना त्वयं स्त्रियामिमिआ ॥ २। २। ७७ ॥

'इदम' इत्यनुवर्तते। इदम सुना सहितस्य पुंलिङ्गे अयमिति स्त्रीलिङ्गे इमिआ इति वा भवति। अयं। यद्यप्येतद्रूपं सिद्धावस्था-पेक्षयापि भवति तथापि इमिआर्थं वचनम्। जसि सर्ववत्। इमे। द्वितीयातृतीययो

टाशसि ण[4] ॥ २। २। ७९ ॥

'इदम' इत्यनुवर्तते। टास् तृतीया अस् द्वितीया तयोः परयो-रिदमो ण इत्यादेशो वा स्यात्। अमि ण। पक्षे इमं।

इहेण त्वमा ॥ २। २। ८० ॥

'इदम' इत्यनुवर्तते। ङि अम् इत्येताभ्यां सहितस्येदमः स्थाने इदं इणं इत्येतौ क्रमेण भवतः। इणं। 'शसेत्' इति वा एत। णे। णा। शस श्लुक्। इमे। इमा। टा। एण। णेण। पक्षे। इमेण।

---

१ काण। काम M २ कालेऽभिधीयते M ३ इत्यधिकृत्य M, R
४ अस्ति R ५ क्रमेण तु भवतः R, T क्रमेण स्त My

इमेण । अत्र 'टो डेणल्' इत्येणादेश । 'इदमेतत्—' इत्यादिना टो डिणा च । इमिणा । भिसि । णेहि । इमेहि । इत्यादि । रामवत् ।

अत्सुस्सिंमिहिस्से ॥ २ । २ । ७८ ॥

'इदम' इत्यनुवर्तते । इदम सुप् ङि भिस् ङस् एतेषु सु स्सिं हि स्स इत्यादेशानापन्नेषु अत्व वा स्यात् । इति इदम सर्वसात्वे 'भिस्भ्यस्सुपि' इत्येत्वे । एहिं इत्यपि । अत्र सूत्रे 'हि' इत्यनेन भिस्भ्यसोरादेशस्य हेर्ग्रहणम् । तेनोभयत्राप्यत्वम् । ङसाविमादेशे । इमाहितो । इत्यादि । रामवत् । भ्यसि । इसोहितो । इमाहितो । इत्यादि । रामवत् । अत्रैव 'टसिसो हि' इत्यादेशे तसिनिदम अत्वे भ्यसि । एहि । आहि । ङसि अस्स । इमस्स ॥

तदिदमेतदा सेसिं तु टसामा ॥ २ । २ । ८४ ॥

ऐषा स्थाने ङस् आम् इत्येताभ्या सह से सिं इत्यादेशो यथासख्य वा भवत । ङसि । से । आमि । सिं । इमेसिं । इमाण । इमाण । ङौ

न त्थः ॥ २ । २ । ८१ ॥

'इदम' इत्यनुवर्तते । इदम परस्य ङे 'ङेस्त्थस्सिम्मि' इति प्राप्त त्थो न भवति । अस्सिं । इमस्सिं । इमम्मि । इट सुपि ऐत् । एसु । एसु । इमेसु । इमेसु । सुपि इदमो णादेश इति केचित् । णेसु । णेसु ॥ ङकारान्तोमसिद्ध ॥ णकारान्त पुलिङ्ग सुगणशब्द । अगागम । सुगणो । सुगणा । इत्यादि । रामवत् । एव सुपर्ण सुरणप्रभृतय ॥ नकारान्त पुलिङ्गो राजन्शब्द । राजन् सु इति स्थिते 'अन्त्यहलोऽश्रदुदि' इति नलोपे 'आ सौ णा' इत्यणिकृत्य

---

१ तु for वा M , भवति for स्यात R , T　५ एसैषा R , T
२ तु for वा M , R , T , स्यात् for भवति My , P　४ स्यात् P , My　५ एत्वे M　६ [illegible] R　७ [illegible] M , R
८ सुमण् M , T

राज्ञ ॥ २ । २ । ५३ ॥

राजन्शब्दस्य नलोपे सत्यस्य सौ परे आत्वं वा स्यात्। राआ। पक्षे

पुंसाणो राजवच्चानः ॥ २ । २ । ६० ॥

पुलिङ्गे वर्तमानस्य अन् इत्यस्य स्थाने आण इत्यादेशो वा स्यात् राजवत्कार्यं च यथादर्शनम्। 'टोणा' 'जश्शस्ङसिङसां णो' इति च भवति। अत्राणादेश एव अयमाणादेशो राजवत् कार्यं च। आणादेशे च 'सो' इत्यादयः प्रवर्तन्ते। राआणो। जसि 'आ सौ वा' इत्यत 'वा' इत्यधिकृत्य

जश्शस्ङसिटसां णोत् ॥ २ । २ । ५५ ॥

रीज्ञ परेषामेषां णोदेत् वा स्यात्। राजन् णो इति स्थिते

णोणाङिष्विदना जः ॥ २ । २ । ५६ ॥

'वा' इत्यनुवर्तते। राजन्शब्दसम्बन्धिनो जस्य अनासहितस्य णो णा इत्यादेशयो ङि वचने च परे इकारो वा स्यात्। इतीत्वे। राइणो। इत्वाभावे। राआणाणो। राआणो। णो शभावे। राआ। आणादेशे। राआणा। सबुद्धौ। हे राआ। हे राअ। हे राओ। हे राआणो। अमि

इणममामा ॥ २ । २ । ५७ ॥

अनाज इत्यनुवर्तते। राजन्शब्दसम्बन्धिनो जस्य अनासहितस्य अम् आम् इत्येताभ्यां सहितस्य इणमित्यादेशो वा राइणं। पक्षे। राअं। आणादेशे। रा[illegible] । राआणं[illegible] [illegible]। राइणो। राआणा। 'शसेत्'।

१ च is omitted in My

R have [illegible]

वा स्यात् M, R[illegible]

My, P [illegible]

टो णा ॥ २ । २ । ५४ ॥

राजन्शब्दात् परस्य टा इत्यस्य णा इत्यादेशो वा स्यात् । 'णो-णाङिपु—' इत्यादिना वा इत्वे । राइणा । पक्षे ।

इणमङसिटा णोणोर्ईण् ॥ २ । २ । ५९ ॥

राजन्शब्दस्यानासहितस्य जस्य ङस् ङसि टा वचनाना यौ णोणा इत्यादेशौ तयो परयो ईण् इत्यादेशो वा स्यात् । टिलोप । रण्णा । नजयोर्लोपे । राएण । राएण । आणादेशे । राआणेण । राआणेण । भिसि

भिसभ्यसामुप्स्वीत् ॥ २ । २ । ५८ ॥

'राज्ञ' इत्यनुवर्तते । राजन्शब्दस्यानासहितस्य जस्य भिस्भ्यस् आम् सुप् इत्येतेषु परेषु ईकारो वा स्यात् । राईहिं । इत्यादि । ईत्वाभावे नजयोर्लोपे । राएहि । इत्यादि । आणादेशे । राआणेहि । इत्यादि । ङसौ णोदु । ईल् । डण् । राआणाणो । राइणो । रणो । पक्षे । राआहिंतो । इत्यादि । आणादेशे । राआणाहिंतो । इत्यादि । भ्यसि आणादेशे । राआणासुतो । इत्यादि । रामवत् । नजयो-र्लोपे । राआहितो । राएहितो । राईहितो । इत्यादि । रामवत् । ङसि । राइणो । रण्णो । राआणाणो । राआणो । राअस्स । राआणस्स । आमि । राईण । राईण । आणादेशे । राआणाण । राआणाण । पक्षे । राआण । राआण । ङौ । इत्वे । राइम्मि । पक्षे । राअम्मि । आणादेशे । राआणे । राआणम्मि । पक्षे । राए । सुपि । राईसु । राईसु । राएसु । राएसु । राआणेसु । राआणेसु ॥ आत्मन्शब्दस्यान्त्य-हलो लुक् । आत्म सु इति स्थिते 'स्तो' इत्यधिकृत्य

वात्मभसनि पः ॥ १ । ४ । ४२ ॥

आत्म भस्म अनयो स्तो पो वा स्यात् । अप्पा । पक्षे । 'मन-

---

१ राज्ञोना° M २ M, drops यौ ३ डित् अण् M ४ भवति M, T ५ इत् M, T.

राज्ञः॰ ॥ २ । २ । ५३ ॥

राजन्शब्दस्य नलोपे सत्यन्त्यस्य सौ परे आत्व वा स्यात्। राआ । पक्षे

पुंस्याणो राजवच्चानः ॥ २ । २ । ६० ॥

पुल्लिङ्गे वर्तमानस्य अन् इत्यस्य स्थाने आण इत्यादेशो वा स्यात् राजवत्कार्यं च यथादर्शनम् । 'टोणा' 'जश्शस्ङसिटसा णोन्' इति चैं भवति । अत्राणादेश एव जश्शसाणादेशौ राजवत् कार्यं च। आणादेशे च 'सो' इत्यादय प्रवर्तन्ते । राआणो । जसि 'जा सौ वा' इत्यत 'वा' इत्यधिकृत्य

जश्शस्ङसिङसा णोन् ॥ २ । २ । ५५ ॥

रोज्ञ परेषामेषां णोर्न् वा स्यात् । राजन णो इति स्थिते

णोणाङिन्विदना च' ॥ २ । २ । ५६ ॥

'वा' इत्यनुवर्तते । राजन्शब्दसंबन्धिनो जस्य अनासहितस्य णो णा इत्यादेशयो ङि' वचने च परे इकारो वा स्यात् । इत्वे । राइणो । इत्वाभावे । राआणाणो । राआणो । णो इभावे । राआ । आणादेशे । राआणा । सबुद्धौ । दे राआ । दे राअ । दे राओ । दे राआणो । अमि

इणममामा ॥ २ । २ । ५७ ॥

अनाज इत्यनुवर्तते । राजन्शब्दसंबन्धिनो जस्य अनासहितस्य अम् आम् इत्येताभ्या सहितस्य इणमित्यादेशो वा स्यात् ॥ राइण । पक्षे । राअ । आणादेशे । राआण । शसि । राआणाणो । राआणो । राइणो । राआणा । 'शस्येत्' । राआणे । राआ ॥

---

१ च is omitted in My २ इत्यधिकृत्य M, R ३ M and R have राज' इत्यनुवर्तते before it ४' मेतेषा M ५ शित् णा वा स्यात् M, R, T ६ My and P drop श्च र ७ ङौ च My, P ८ M drops शब्द ९ णाआदेशे M

शिरस् नभस् एतान् वर्जयित्वा । इति पुंलिङ्गताया कर्मन् कम्मो नर्मन् नम्मो इत्यादि । रामवत् । जन्मन्शब्दस्य

तु सक्खिणमवंतजम्मणमहंताः ॥ १ । १ । ३७ ॥

साक्ष्यादय शब्दा विहितान्त्यव्यञ्जनादेशा वा निपात्यन्ते । इति निपातात् जम्मणो । पक्षे । जम्मो ॥ भसन्शब्दे 'वात्मभसनि प' इति स्तोर्वा प । भप्पो । पत्वाभावे 'मनयाम्' इति मलोपे शेषद्वित्वे च भस्सो ॥ छद्मन्शब्दे 'वा च्छद्म—' इत्यादिना अन्त्यहल मागुत्वे । छउमो । पक्षे । छम्मो । उभयत्रान्त्यहलो लोप दलोपश्च ॥ श्लेष्मन्शब्दे 'श्लेष्मबृहस्पतो तु फो' इति द्वितीयस्य स्तो फत्वे । सेफो । सिलेस्मो । अत्र 'लादक्ष्णीवेषु' इति सयुक्तस्यान्त्यहल प्रागित्वम् । 'श्मष्म—' इत्यादिना स्मादेश. । इन्नन्तेषु सर्वत्र नलोपे कविशब्दवत् । करी । करिणो । इत्यादि । मनस्विन्शब्दे वक्रादिपाठाद् द्वितीयादच. परो बिन्दु । मणसी ॥ साक्षिन्शब्दस्य 'तु सक्खिण—' इत्यादिना निपातनात् सक्खिणो । पक्षे । सक्खी ॥ पथिन्शब्दस्य 'मूषिकविभीतक—' इत्यादिना इत अत्वम् । अन्त्यहलो लोप । थस्य हत्वम् । पहो । पहा । इत्यादि । रामवत् ॥ ञकारान्तोऽप्रसिद्ध ॥ भकारान्त पुंलिङ्ग सुकक्कुप्शब्द ।

हः क्षुत्ककुभि ॥ १ । १ । ३१ ॥

'अन्त्यहलोऽश्रदुदि' इत्यत 'अन्त्यहल' इत्यनुवर्तते । क्षुत्ककुभोरन्त्यहलो हकारो भवति । लोपापवाद । सुकक्कुहो । सुकक्कुहा । इत्यादि । रामवत् ॥ यढान्तावप्रसिद्धौ । धकारान्त पुंलिङ्ग तत्त्वयुत्शब्द । अगागम । तच्चवुहो । तच्चवुहा । इत्यादि । रामवत् । एव सुयुत्सुसमित्प्रभृतय ॥ जकारान्त पुंलिङ्गो विश्वसृक्शब्द ।

१ इति निपातात् is dropped in My, P २ शेषद्वित्वे च is dropped in M, T ३ इत्यनुवर्तते M ४ M drops तच्चवुहो

[1]ङेसिति चतुर्थी ङमिति षष्ठी । चतुर्थीस्थाने षष्ठी स्यात् । मुणिस्स मुणिणो भोअण देहि । णमो देवस्स देवाण ॥

तादर्थ्ये ङेस्तु ॥ २ । ३ । ३६ ॥

तादर्थ्यचतुर्थ्येकवचनस्थाने षष्ठी वा स्यात् । देवस्स । देवाय । देवार्थमित्यर्थ । 'ङे' इति किम् । देवाण ॥

वधाड्डाइ च ॥ २ । ३ । ३७ ॥

वधात् परस्य ङे स्थाने आइ इति डिद्वा स्यात् । जातु षष्ठी । वहाइ । वहस्स । वहाय । वधार्थम् ॥

क्वचिदसादेः ॥ २ । ३ । ३८ ॥

ङमनुवर्तते । द्वितीयादिविभक्तीना स्थाने क्वचित् षष्ठी स्यात् । माहवस्स वन्दे । माधव वन्दे । धणस्स लद्धो । धनेन लब्ध । चोरस्स भिटइ । चोराद्बिभेति । अन्तेउरस्स रमिउ आअओ । अन्त - पुरे रन्तुमागत ॥

अस्टासोर्ङीप् ॥ २ । ३ । ३९ ॥

अस् द्वितीया टास् तृतीया तयो स्थानेङीप् सप्तमी क्वचिद्भवति तु । गामे वहामि । ग्राम वहामि । णअरे णजामि । नगर नयामि । अत्र द्वितीयाया । तेसु अलङ्किआ पुहवी । तैरलङ्कृता पृथिवी । अत्र तृतीयाया ॥

ङसिसष्टास् च ॥ २ । ३ । ४० ॥

ङसिस पञ्चम्या टास् तृतीया चकारात् सप्तमी भवति । चोरेण बिहइ । चोराद्बिभेति । अंतेउरे रमिअ आअओ । अन्त पुराद्रन्त्वा आगत ॥

द्विपोस् ॥ २ । ३ । ४१ ॥

---

१ ङेस् चतुर्थी P, My २ ङ षष्ठी My, P ३ देवाण M ४ °क-वचनस्य M ५ M drops वा ६ पदात् M ७ पदात् M ८ स्यात् M, चकारात् T ९ पदार्थम् M

निपात्यते । अच्छिहरुल्लो । रूपवति च्छाइल्लो ॥ २६ ॥ रूपवत्यय प्रयोज्य । छाइल्लो । कान्तिमान् । लतागृहे कुडङ्गकुडङ्गकुडुको: ॥ २७ ॥ अस्मिन्नेते निपात्यन्ते । कुडुङ्गो । कुडङ्गो । कुडुको । वृद्धे जरण्डो ॥ २८ ॥ वृद्धे अय निपात्यते । जरण्डो । अच्छिविअच्छी परस्पराकृष्टौ ॥ २९ ॥ अस्या अच्छिविअच्छी इति निपात्यते । अच्छि । विअच्छी । धूमरी तुहिने ॥ ३० ॥ तुहिने अय निपात्यते । धूमरी । सोत्ती तरङ्गिण्याम् ॥ ३१ ॥ अस्यामय निपात्यते । सोत्ती । ग्रहमीते अहिसिओ ॥ ३२ ॥ अस्मिन्नय प्रयोज्य । अहिसिओ । गवि गावी ॥ ३३ ॥ गवि गावीति निपात्यते । गावी । उद्धलपद्धलौ पार्श्वद्वयाप्रवृत्तौ ॥ ३४ ॥ अनयोरुद्धल पद्धल इत्येतौ निपात्येते । अङ्गस्पर्शनिमित्तयोर्हासपुलकयोर्गज्जलिओ ॥ ३५ ॥ अङ्गस्पर्शनिमित्ते हासे पुलके चाय निपात्यते । गज्जलिओ । चित्तलं रम्ये ॥ ३६ ॥ रम्ये अय निपात्यते । चित्तल । पाडहुकः प्रतिभुवि ॥ ३७ ॥ प्रतिभुव्यय निपात्यते । पाडहुक. । पासणिअपासाणिओ साक्षिणि ॥ ३८ ॥ अस्मिन्नेतौ निपात्येते । पासणिओ । पासाणिओ । अवरिज्जलाहिल्लावद्वैतलम्पटयोः ॥ ३९ ॥ अनयोरेतौ क्रमान्निपात्येते । अवरिज्ज । लाहिल्लो । कडिल्लमाद्यीगेहनदौवारिककटिवस्त्रनिर्विवरविपक्षेषु ॥ ४० ॥

१ प्रयोज्य My, P २ Omitted in P, My ३ चाइल्लो M ४ My and P drop रूप—प्रयोज्य ५ चाइल्लो M ६ M drops it ७ प्रयोज्य T ८ My and P omit it ९ अचिविअची M १० अचिविअची M ११ निपात्येते M १२ अचि । विअची M १३ My and P drop it १४ Omitted in P, My १५ My and P omit it १६ Omitted in P, My १७ My and P drop the line १८ My and P omit it १९ My and P omit the line २० निपात्य T २१ पाडहुओ M २२ My and P omit the line २३ My and P drop from अनयो—to निपात्येते

अछिछ पुलंघअ रसाआ ॥ ९ ॥ एते त्रयो भ्रमरे निपात्यन्ते । अछिल्लो । पुलघओ । रसाओ । लअणी कणई लइणा लतायाम् ॥ १० ॥ त्रय एते लतायां निपात्यन्ते । लअणी । कणई । लइणा । कनीयस्यां वहुआ ॥ ११ ॥ अस्यामय निपात्यते । वहुआ । भ्रातृजायायां भाउआ ॥ १२ ॥ अस्यां भाउज्जा इति निपात्यते । भाउज्जा । मातुलात्मजाश्याल्योर्मेहुणिआ ॥ १३ ॥ अनयोरय निपात्यते । मेहुणिआ । रोदनशीले रिमिणो ॥ १४ ॥ अस्मिन् रिमिण इति निपात्यते । रिमिणो । अडअणाछिच्छईपुण्णाळ्यः पुंश्चल्याम् ॥ १५ ॥ त्रयोऽस्यां निपात्यन्ते । अडअणा । छिच्छई । पुण्णाळी । बहुमिथ्यावादिनि चप्पळओ ॥ १६ ॥ अस्मिन्नय निपात्यते । चप्पळओ । पिव्व जले ॥ १७ ॥ जले अय निपात्यते । पिव्व । मघोणो मघवति ॥ १८ ॥ मघवत्यय निपात्यते । मघोणो । सइलासिओ मयूरे ॥ १९ ॥ अस्मिन्नय निपात्यते । सईलासिओ । मेलपिते वाउल्लो ॥ २० ॥ मेलपिते वाउल्लो इति निपात्यते । वाउल्लो । मूर्खेपलहिअओ ॥ २१ ॥ अस्मिन्नय निपात्यते । पलहिअओ । उपलहृदय इत्यर्थ । चण्डिक्कं कोपे ॥ २२ ॥ कोपेय निपात्यते । चण्डिक्को । चण्डिक्क पिशुनकोपयोः ॥ २३ ॥ अनयोरय निपात्यते । चण्डिक्को । म्लाने कुम्मणो ॥ २४ ॥ अस्मिन्नय निपात्यते । कुम्मणो । द्वेष्ये अच्छिहरल्लो ॥ २५ ॥ अस्मिन्नय

१ M drops this Sûtra, M has it with this remark ग्रन्थान्तरेऽय दृश्यते २ My and P drop it ३ My and P omit it ४ अस्यां त्रयो M ५ वाचिनि M ६ My and P drop the line ७ My and P, drop this line ८ My and P omit it ९ My and P omit it १० My and P drop the line ११ My and P drop from अस्मिन् to पलहिअओ १२ चण्डिक्को M १३ My and P omit it १४ चण्डिक्को M १५ My and P drop it

सीउल्ल । सीढ्ढ । तित्तिवरण्डौ तात्पर्यप्राकारयोः ॥ ५७ ॥ अनयोरेतौ क्रमात् स्त । तित्ति । वरंडो । वरण्ड संस्कृतेपीति केचित् । त्रपायां हीरेणा ॥ ५८ ॥ अस्यामय स्यात् । हीरेणा । ग्रामभक्षके गामेरेडो ॥ ५९ ॥ योन्त स्थित्वा ग्राम भुङ्क्ते तस्मिन् गामेरेडो इति निपात्यते । गामेरेडो । लडहावेल्लर्यौ विलासवत्याम् ॥ ६० ॥ अस्यामेतौ स्त । लडहा । वेल्लरी । डुम्मइणीलञ्जालुइण्यौ कलहकारिणीत्रपावत्योः ॥ ६१ ॥ अनयोरेतौ क्रमात् स्त । डुम्मइणी । लञ्जालुइणी । तण्णाअचिक्खअणावार्द्रासहनयोः ॥ ६२ ॥ आर्द्रे असहने चैतौ क्रमात् स्त । तण्णाअ । चिक्खअणो । वेणिअसुण्हसिऔ वचनीयनिद्राशीलयोः ॥ ६३ ॥ अनयोरेतौ क्रमात् स्त । वेणिअ । सुण्हसिओ । वप्पिअबन्धोल्लौ केदारमेलकयोः ॥ ६४ ॥ अनयो क्रमादेतौ स्त । वप्पिओ । बन्धोल्लो । वारिज्जो विवाहे ॥ ६५ ॥ अस्मिन्नय स्यात् । वारिज्जो । हडहडसाउल्लावनुरागे ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । हडहडो । साउल्लो । माणंसी मायाविमनस्विनोः ॥ ६७ ॥ अनयोरय निपात्य । माणंसी । फोडिअकोडिल्लौ पिशुने ॥ ६८ ॥ अस्मिन्नेतौ निपात्येते । फोडिओ । कोडिल्लो । अट्टणगजोलौ वैतंसमाकुलयोः ॥ ६९ ॥ अनयोरेतौ स्याताम् । अट्टणो । गजोलो । वन्दिनि वडिणो ॥ ७० ॥ अस्मिन्नय निपात्य । वडिणो । तच्चिलतच्छिलौ तत्परे ॥ ७१ ॥ अस्मिन्नेतौ निपात्येते । तच्चिलो । तच्छिलो । ऊसुंभिअ रुद्धगलरोदने

१ हिरणा M २ My and P omit the line ३ M has अस्यामय स्यात् for योन्त स्थित्वा—निपात्यते ४ गावरेडो M ५ गावरेडो M ६ च क्रमादेतौ My, T ७ वन्दोल्ली M ८ °मेळकनन्धयो M ९ वन्दोल्लो M १० वारिज्जवि° M ११ My and P drop the line. १२ वारिज्ज M १३ स्यात् M १४ My and P omit it १५ प्रमोज्यौ T १६ आसन° M १७ My and P drop the line १८ My and P drop अस्मिन्नेतौ निपात्येते

आशी मसृतिषु षट्सु कडिल्लमिति निपात्यते । कडिल्ल । रूवसिणी कुडुंबीअं रूपवतीसुरतयोः ॥ ४१ ॥ रूपवत्यां सुरते च क्रमादेतौ स्त । रूवसिणी । कुडुंबीअ । अन्तरिज्ज रशनाकटिसूत्रयोः ॥ ४२ ॥ अनयोरय निपात्य । अन्तरिज्ज । अवड्डुलिअं कूपादिनिपतिते ॥ ४३ ॥ असिन् अवडुलिअ इति निपात्यते । अवडुलिअ । अवडुक्किअ इति केचित् । पिप्पडिअबुड्डिरौ यत्किंचित्पठितमहिषयोः ॥ ४४ ॥ यथाक्रम निपात्येते । पिप्पडिअ । बुड्डिरो । सरिसाहुलगुमिलौ सदृशमूढयोः ॥ ४५ ॥ अनयोरेतौ क्रमान्निपात्येते । सरिसाहुलो । गुमिलो । कच कार्ये ॥ ४६ ॥ असिन्नय स्यात् । कच । घडिआघडाघड्यौ गोष्ठयाम् ॥ ४७ ॥ गोष्ठयामेतौ निपात्यौ । घडिआ । घडाघडी ॥ निश्रेण्यां कमणी ॥ ४८ ॥ किरिकिरिआ कर्णोपकर्णिकाकुतुकयोः ॥ ४९ ॥ अनयोरय प्रयोज्य । किरिकिरिआ । अण्णइकः सर्वार्थतृप्ते ॥ ५० ॥ सर्वार्थे यस्तृप्तस्तसिन्नय निपात्य । अणइओ । साहुली शाखायाम् ॥ ५१ ॥ शाखायामय निपात्य । साहुली । इष्टार्थयाचनशीले जपेक्खिमग्गिरओ ॥ ५२ ॥ असिन्नय निपात्यते । जपेक्खिमग्गिरओ । गअसाउल्लसिहडहिल्लौ विरक्तबालकयोः ॥ ५३ ॥ अनयोरेतौ क्रमाद् भवत । गअसाउल्लो । सिहडहिल्लो । धूर्तवृषभे अलवलवसहो ॥ ५४ ॥ असिन्नय प्रयोज्य । अलवलवसहो । प्रणयकोपे खुरहखुडी ॥ ५५ ॥ असिन्नय निपात्य । खुरहखुडी । हिमकालदुर्दिने सीउल्ल सीउट्ट च ॥ ५६ ॥ असिन्नेतौ निपात्येते ।

---

1 My and P omit it 2 यथाक्रम° T 3 My and P omit it. 4 M omits अव—केचित् 5 My and P omit the line 6 निपात्येते T 7 M omits it 8 My and P omit सर्वार्थे—निपात्य 9 My and P omit it 10 °साहुल्ल M 11 इइलौ M. 12 °साहुल्लो M 13 °डहल्लो M 14 My and P drop it 15 निपात्यते My, P 16 प्रयोज्यं P, My

त्यते । काअपिउला । मुहल मुरे ॥ ९३ ॥ मुहल । गत्तडी गायिकायाम् ॥ ९४ ॥ असामय स्यात् । गैत्तडी । दुद्दोलना गवि ॥ ९५ ॥ गव्यय निपात्यते । दुद्दोलना । मामाय्यभये ॥ ९६ ॥ अभये अय स्यात् । माभाइ । तोमरिकः शस्त्रमार्जने ॥ ९७ ॥ असिन्नय स्यात् । तोमरिओ । वहुहाडिणी वध्वा उपरि परिणीतायाम् ॥ ९८ ॥ असामय स्यात् । वहुहाडिणी । रूअरूइआ उत्कलिकायाम् ॥ ९९ ॥ असामय स्यात् । रूअरूइआ । पुप्फीपिउसिआपिउच्छाः पितृष्वसरि ॥ १०० ॥ असामेते स्यु । पुप्फी । पिउसिआ । पिउच्छा । आसन्नप्रसवायामणुसूआ ॥ १०१॥ असामय स्यात् । अणुसूआ । भागिनेये भच्चो ॥ १०२ ॥ असिन्नय स्यात् । भच्चो । ओहल्यपसृतौ ॥ १०३ ॥ अपसृतावय स्यात् । ओहल्ली । मम्मक्कमडप्परौ गर्वे ॥ १०४ ॥ असिन्नेतौ स्याताम् । ममक्को । मडप्परो ।

इति वरदत्ताद्य ॥

---

गोणाद्याः ॥ १ । ३ । १०५ ॥

गोणादय शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमविकारा बहुल निपात्यन्ते ।

गवि गोणा ॥ १ ॥ गेव्यय स्यात् । गोणा । तल्लवल्लडवलानि तल्पे ॥ २ ॥ असिन्नेते स्यु । तल्ल । तल्लड । तल । धिरत्थु धिगस्त्वित्यर्थे ॥ ३ ॥ असिन्नय स्यात् । गोलागोदे गोदावर्याम् ॥ ४ ॥ असामेतौ स्याताम् । गोला । गोदा । गोला संस्कृतेपीति

१ राज॰ M २ My and P omit it ३ P and My omit it ४ स्यात् My, P ५ Omitted in My, P, T has माभाइ ६ My and P omit असिन्नय स्यात् ७ भच्चो भागिनेये T ८ M omits असिन्—स्यात् ९ My and P omit the line

॥ ७२ ॥ अस्मिन्नय स्यात् । अमुमिअ । णिउकवम्हालठाणिजउ चउआस्तूष्णीकापसारगौरवोपकारिषु ॥ ७३ ॥ क्रमादेतेष्वेते स्यु । णिउक्को । वम्हालो । ठाणिज्ज । उवउज्झो । एक्कल्लमहल्लौ प्रबलमुखरयोः ॥ ७४ ॥ अनयोरेतौ स्याताम् । एक्कल्लो । महल्लो । माउसिआ माउच्छा च मातृष्वसरि ॥ ७५ ॥ अस्यामेतौ स्याताम् । माउसिआ । माउच्छा ॥ कुच्छिमई गर्भवत्याम् ॥ ७६ ॥ अस्यामय स्यात् । कुच्छिमई । रिंछोलीघोरण्यौ पङ्क्तौ ॥ ७७ ॥ अस्यामेतौ स्याताम् । रिंछोली । घोरंणी । पटकुट्यां पडमा ॥ ७८ ॥ धूनि ज़ुजणो ॥ ७९ ॥ करमरी हठहृतायाम् ॥ ८० ॥ दववर्त्मनि दड्डाली ॥ ८१ ॥ कृत्रिमे कारिमम् ॥ ८२ ॥ जघालुअजघामऔ द्रुते ॥ ८३ ॥ एतौ द्रुते स्याताम् । जघालुओ । जघामओ । बलामोडी बलात्कारे ॥ ८४ ॥ अस्मिन्नय स्यात् । बलामोडी । चक्कल वर्तुले ॥ ८५ ॥ अस्मिन्निद स्यात् । चक्कल ॥ बहुल्ली क्रीडोचितसालभञ्जिकायाम् ॥ ८६ ॥ अस्यामय स्यात् । बहुल्ली । मत्ते मत्तवालो ॥ ८७ ॥ मत्तवालो । बहुल्लिआ ज्येष्ठभ्रातृवध्वाम् ॥ ८८ ॥ अस्यामय स्यात् । बहुल्लिआ । जमणमणा. स्वैरमौथिपि ॥ ८९ ॥ अस्मिन्नय स्यात् । जमणमणो । भाइरमेज्जलमेज्जओज्झरा भीरौ ॥ ९० ॥ चत्वार एते निपात्यन्ते । भाइरो । मेज्जलो । भेज्जो । ओज्झरो । आहड सीत्कारे ॥ ९१ ॥ सीत्कारे आहड स्यात् । आहड । कौअपिउला कोकिलायाम् ॥ ९२ ॥ अस्यामय निपा-

---

१ My and P drop अनयो—स्याताम् २ क्रमाद् स्याताम् T ३ My and P omit the line ४ रिंमोल्लिदो M ५ My and P drop the line ६ रिंमोळि M ७ दोरणी M ८ अस्मि मेतौ स्याताम् M ९ P and My drop the line M has चक्कल only in place of the line १० My and P drop it ११ My and P omit it १२ P and My omit अस्यामय स्यात् १३ °मापणे T १४ P and My omit the line १५ राअ M १६ कोकिरे T १७ अस्मिमय स्यात् T

हिज्जा । त्रिचत्वारिंशति तेआलिसा ॥ ३० ॥ अस्मिन्नय स्यात् । तेआलिसा । असघडोसिण्यावास्थाज्योत्स्नयोः ॥ ३१ ॥ अनयोरेतौ क्रमात् स्त । असघो । डोसिणी । लकुडो लगुडे ॥ ३२ ॥ छेणो स्तेने ॥ ३३ ॥ कक्खडकक्खलौ कर्कशे ॥ ३४ ॥ अलावूकलत्रयोः कलवूकत्ते ॥ ३५ ॥ अनयोरेतौ क्रमात् स्त[1] । कलवू । कत्त । निलये णळिअणिहेळणे ॥ ३६ ॥ अस्मिन्नेतौ स्याताम् । णळिअ । णिहेळण । णिक्कडणिरासौ निश्चयनृशसयोः ॥ ३७ ॥ अनयोरेतौ क्रमात् स्त । णिक्कडो । णिरासो । विहुडुअ-णिप्फसौ विधुन्तुदनिस्त्रिंशयोः ॥ ३८ ॥ अनयोरेतौ क्रमात् स्त । विहुडुओ । णिप्फसो । बहिअकोलीरे मथितकुरुविन्दयोः ॥ ३९ ॥ अनयोरेतौ क्रमात् स्तै[3] । बहिओ । कोळीर । खेड्ड खेले ॥ ४० ॥ विउसग्गव्युडौ व्युत्सर्गविटयोः ॥ ४१ ॥ [4]अनयो क्रमादेतौ स्त । विउसग्गो । व्युडो । सघअणघाअणौ सहननगायनयोः ॥ ४२ ॥ अनयोरेतौ क्रमात् स्याताम् । सघअण । घाअणो । मत्कुणककुदज-म्भालेषु डेंकुणकउडसेवालाः ॥ ४३ ॥ एतेष्वेते क्रमात् स्यु । डेंकुणो । कउड । सेवाळ । अथक्कखुड्डअवड्डुअरा अकांडक्षुल्लक-बृहच्चरेषु ॥४४॥ एष्वेते क्रमात् स्यु । अथक्क । खुड्डओ । वड्डुअरो । आनने आणुअ ॥ ४५ ॥ संगोल्लसामरीसिप्पितलाराः सघातशा-ल्मलीसूचीतलवरेषु ॥ ४६ ॥ एषु क्रमादेते स्यु । संगोल्ल । सामरी । सिप्पी । तलारो । अव्वा अम्बायाम् ॥ ४७ ॥ [5]अस्यामय स्यात् । अव्वा । पम्मिहीमोरजच्छन्दाः पाणिमीमारसच्छन्देषु ॥ ४८ ॥ एतेष्वेते क्रमात् स्यु । पम्मी । हीमोर । जच्छदो । दिनमुखकुङ्कुम शीर्षत्रमस्तरेष्वणुदिवकुङ्कुसीसक्कसत्थराः ॥ ४९ ॥ एषु चत्वार

---

[1] *णिप्फसो My [2] णिप्फसो My [3] स्याताम् T [4] My and P drop अनयो —स्तः [5] P and My omit the line

केचित् । ओमाअण महीशाने ॥ ५ ॥ अनिन्नय स्यात् । आपोद्दन इति केचित् । घणई घनगाजौं ॥ ६ ॥ अस्नामय स्यात् । वणई । पगुरणं प्रावरणे ॥ ७ ॥ ओसिरणगोर्सा [1]व्युत्सर्जनप्रत्यूषयोः ॥ ८ ॥ अनयोरेतौ क्रमाद् भेवत । घोवयेनथोका स्तोके ॥ ९ ॥ आअविरुओ अ[1]निरुद्धयोः ॥ १० ॥ पत्थेवाअवेलम्बौ पाथेय विडम्बनयोः ॥ ११ ॥ अनयोरेतौ क्रमात् स्त । पत्थेवाओ । वेलम्बो । बालबुदुदकरीरेषु बाअबुलबुलकरिल्ला: ॥ १२ ॥ एम्वेते क्रमात् [2]स्तु । बाओ । बुलबुलो । करिल्लो । ऊणादोग्गघणिआ यूकयुग्मघन्यासु ॥ १३ ॥ एम्वेते क्रमात् स्तु । ऊआ । दोग्ग । घणिआ । उद्वहने णिव्वहणं ॥ १४ ॥ णिव्वहइ । उद्वहतीत्यर्थं । छि छि धिग्धिगित्यर्थे ॥ १५ ॥ धिग्धिगित्यर्थे छिछि इति स्यात् । छत्तावळी ॥ १६ ॥ [4]अस्नामय स्यात् । ग्रहिल्लो ग्रहले ॥ १७ ॥ असिन्नय स्यात् । गोसमूहे गोणिक्को ॥ १८ ॥ गोसमूहे गोणिक्को इति स्यात् । अयुजरेयई अचिरयुवत्याम् ॥ १९ ॥ [5]अस्नामय स्यात् अयुजरेयई । [6]आणरह नववध्वाम् ॥ २१ ॥ [7]अस्नामय स्यात् । आणरह । असुरे अमओ ॥ २२ ॥ [8]असुरे अय स्यात् । अमओ । पण्णवण्णा पञ्चपञ्चाशति ॥ २३ ॥ असिन्नय स्यात् । पण्णवण्णा । तेवण्णा त्रिपञ्चाशति ॥ २४ ॥ पण्णा पञ्चाशति ॥ २५ ॥ गामहणघुसिमे ग्रामस्थानघसृणयोः ॥ २६ ॥ अनयोरेतौ क्रमात् स्त । गामहण । घुसिम । छटायां छट्टा ॥ २७ ॥ पाउरणबइल्लौ प्रावरणबलीवर्दयोः ॥ २८ ॥ अनयोरेतौ क्रमात् स्त । पाउरण । बइल्लो । हिञ्जा ह्रस्थाने ॥ २९ ॥ ह्र इत्यर्थे हिञ्जेति निपात्यते ।

---

[1] प्रत्यूषव्युत्सर्जनयो T [2] स्त T [3] एषु क्रमादेते T [4] My and P omit the line [5] My and P omit the line [6] Sûtra 20 is not found It is given in the Appendix to the P as घुघुव अभिसारिकायाम् । [7] My and P omit the line. [8] P and My omit the line

हिज्जा । त्रिचत्वारिंशति तेआलिसा ॥ ३० ॥ असिन्नय स्यात् । तेआलिसा । असघडोसिण्यावास्याज्योत्स्नयोः ॥ ३१ ॥ अनयोरेतौ क्रमात् स्त[1] । असंघो । डोसिणी । लकुडो लगुडे ॥ ३२ ॥ छेणो स्तेने ॥ ३३ ॥ कक्खडकक्खलौ कर्कशे ॥ ३४ ॥ अलाबूकलत्रयोः कलबूकत्ते ॥ ३५ ॥ अनयोरेतौ क्रमात् स्त । कलबू । कत्त । निलये णळिअणिहेळणे ॥ ३६ ॥ असिन्नेतौ स्याताम् । णळिअ । णिहेळण । णिक्कडणिरासौ निश्चयनृशंसयोः ॥ ३७ ॥ अनयोरेतौ क्रमात् स्त । णिक्कडो । णिरासो । विहुडअणिप्फसौ विधुन्तुदनिस्त्रिंशयोः ॥ ३८ ॥ अनयोरेतौ क्रमात् स्त । विहुडओ । णिप्फसो । वहिअकोलीरे मथितकुरुविन्दयोः ॥ ३९ ॥ अनयोरेतौ क्रमात् स्तं । वहिओ । कोळीर । खेड्ड खेले ॥ ४० ॥ विउसग्गव्युडौ व्युत्सर्गविटयोः ॥ ४१ ॥ अनयो क्रमादेतौ स्त । विउसग्गो । व्युडो । सघअणघाअणौ संहननगायनयोः ॥ ४२ ॥ अनयोरेतौ क्रमात् स्याताम् । सघअण । घाअणो । मत्कुणककुदजम्बालेषु डेंकुणकउडसेवालाः ॥ ४३ ॥ एतेष्वेते क्रमात् स्यु । डेंकुणो । कउड । सेवाळ । अथक्कखुड्डअवड्डुअरा अकाण्डक्षुल्लकबृहत्तरेषु ॥४४॥ एष्वेते क्रमात् स्यु । अथक्क । खुड्डुओ । वड्डुअरो । आनने आणुअ ॥ ४५ ॥ सगोल्लसामरीसिप्पितलाराः संघातशाल्मलीसूचीतलवरेषु ॥ ४६ ॥ एषु क्रमादेते स्यु । संगोल्ल । सामरी । सिप्पी । तलारो । अव्वा अम्बायाम् ॥ ४७ ॥ अस्यामय स्यात् । अव्वा । पम्मिहीमोरजच्छन्दाः पाणिमीमारस्वच्छन्देषु ॥ ४८ ॥ एतेष्वेते क्रमात् स्यु । पम्मी । हीमोरं । जच्छदो । दिनमुखकुड्डकशीर्षत्रसस्तरेष्वणुदिवकुड्डसीसकसत्थराः ॥ ४९ ॥ एषु चत्वार

---

[1] °णिफसौ My [2] णिप्फसो My [3] स्याताम् T [4] My and P drop [5] P and My omit the line

केचित् । ओसाअण महीशाने ॥ ५ ॥ असिन्नय स्यात् । आपोसाअण इति केचित् । वणई वनराजौ ॥ ६ ॥ अस्यामय स्यात् । वणइ । पंगुरणं प्रावरणे ॥ ७ ॥ ओसिरणगोसौ [1]व्युत्सर्जनप्रत्यूषयोः ॥ ८ ॥ अनयोरेतौ क्रमाद् [2]भवत । थोवथेवयोक्का स्तोके ॥ ९ ॥ आअविरुओ अविरुद्धयोः ॥ १० ॥ पत्थेवाअवेलम्बो पाथेय विडम्बनयोः ॥ ११ ॥ अनयोरेतौ क्रमात् स्त । पत्थेवाओ । वेलम्बो । बालबुद्बुदकरीरेषु बाअबुलबुलकरिल्लाः ॥ १२ ॥ [3]एव्वेते क्रमात् स्यु । बाओ । बुलबुलो । करिलो । ऊआदोग्गधणिआ यूकयुग्मधन्यासु ॥ १३ ॥ एव्वेते क्रमात् स्यु । ऊआ । दोग्ग । धणिआ । उद्वहने णिव्वहणं ॥ १४ ॥ णिव्वहइ । उद्वहतीत्यर्थ । छि छि धिग्घिगित्यर्थे ॥ १५ ॥ धिग्धिगित्यर्थे छिछि इति स्यात् । द्यावडी ॥ १६ ॥ [4]अस्यामय स्यात् । ग्रहिल्लो ग्रहले ॥ १७ ॥ असिन्नय स्यात् । गोसमूहे गोणिको ॥ १८ ॥ गोसमूहे गोणिक्को इति स्यात् । अयुजरेवई अचिरयुवत्याम् ॥ १९ ॥ [5]अस्यामय स्यात अयुजरेवई । [6]आणरहू नववध्वाम् ॥ २१ ॥ [7]अस्यामय स्यात् । आणरहू । असुरे अमओ ॥ २२ ॥ [8]असुरे अय स्यात् । अमओ । पण्णवण्णा पञ्चपञ्चाशति ॥ २३ ॥ असिन्नय स्यात् । पण्णवण्णा । तेवण्णा त्रिपञ्चाशति ॥ २४ ॥ पण्णा पञ्चाशति ॥ २५ ॥ गामहणघुसिमे ग्रामस्थानघसृणयोः ॥ २६ ॥ अनयोरेतौ क्रमात् स्त । गामहण । घुसिम । छटायां छट्टा ॥ २७ ॥ पाउरणबइल्लौ प्रावरणबलीवर्दयो. ॥ २८ ॥ अनयोरेतौ क्रमात् स्त । पाउरण । बइल्लो । हिज्जा ह्यस्तने ॥ २९ ॥ अ इत्यर्थे हिज्जेति निपात्यते ।

---

१ प्रत्यूषव्युत्सर्जनयो T २ स्त T ३ एषु क्रमादेते T ४ My and P omit the line ५ My and P omit the line ६ Sûtra 20 is not found It is given in the Appendix to the P as पुगुट्ट उमिसारिकायाम् । ७ My and P omit the line. ८ P and My omit the line

निपात्या । अच्छिवडण । वल्लविअ । णीसंको । एलविलो धनिष्ट-योः ॥ ३२ ॥ अनयोरय निपात्यते । एलविलो । मुहरओ शारिकागृहचटकयोः ॥ ३३ ॥ अनयोरय निपात्यते । मुहरओ । णिम्मीसुअहट्टमहट्टौ निश्मश्रुकयुवस्थयोः ॥ ३४ ॥ अनयोरेतौ क्रमात् स्याताम् । णिम्मीसुओ । हट्टमहट्टो । णिहुअजहणरोहौ सुर-ऊर्वोः ॥ ३५ ॥ सुरते ऊरौ चैतौ क्रमात् स्याताम् । णिहुअ । जह-णरोहो । अच्छुद्धसिरी मनोरथाधिकफलप्राप्तौ ॥ ३६ ॥ फलप्रा-प्तावय निपात्यते । अच्छुद्धसिरी । अव्वुद्धसिरीति केचित् । पल्लोट्ट-जीहाउज्झहरौ रहस्यभेदिनि ॥ ३७ ॥ पिशाचे परेओ ॥ ३८ ॥ अस्मिन्नय प्रयोज्य । चोरधूर्तयोर्बहुजाणो ॥ ३९ ॥ अय चोरे धूर्ते च निपात्यते । जारधूर्तयोरिति केचित् । बहुजाणो । जोईउज्झल्लौ विद्युत्प्रबलयोः ॥ ४० ॥ अनयोरेतौ क्रमात् स्त । जोई । उज्झलो । मिंग नीलसुकृतयोः ॥ ४१ ॥ नीले सुकृते चाय स्यात् । परिधाने णिअद्धण ॥ ४२ ॥ जइणोसुअ चल्लणक च जघनांशुके ॥ ४३ ॥ अस्मिन्नेतौ स्याताम् । जइणोसुअ । चल्लणक । पाउरण कवचे ॥ ४४ ॥ कवचेय प्रयोज्य । पाउरण । कम्पापचारयोरोअल्लो ॥ ४५ ॥ अनयोरय स्यात् । ओअल्लो । कराघाते चपेटा ॥ ४६ ॥ अस्मिन्नय स्यात् । रइलक्खगोसण्णौ जघनमूर्खयोः ॥ ४७ ॥ अनयोरेतौ क्रमात् स्याताम् । रइलक्ख । गोसण्णो । वावडपुरिल्लौ कुटुम्बिदैत्ययोः ॥ ४८ ॥ अनयोरेतौ क्रमात् स्त । वावडो । पुरिल्लो । परमत्तचचिक्कौ भीरुस्थापकयोः ॥ ४९ ॥ अनयोरेतौ क्रमात् स्त । परमत्तो । चचिक्को । काळमट्टिअइद्धग्गिधूमास्तमिस्र-विष्णुतुहिनेषु ॥ ५० ॥ एषु क्रमात् त्रयो निपात्या । काळ । मट्टिओ । इद्धग्गिधूमो । पत्थरओवाअओ पादताडनापातयोः

---

१ बहुजाणो चोरधूर्तयो T २ अनयोर्बहुजाणो निपात्य T ३ ओअल्लो कम्पापचारयो T ४ कम्पे अपचारे च ओअल्लो इति स्यात् । T

॥ ५१ ॥ अनयोरेतौ क्रमात् स्त । पत्थरं । ओवाअओ । पिउच्छा माउआ च सख्याम् ॥ ५२ ॥ सख्यामेतौ, निपात्येते । पिउच्छा । माउआ । पोरत्थदोसौ मत्सरिकोपयोः ॥ ५३ ॥ अनयोरेतौ क्रमात् स्त । पोरत्थो । दोसो । चच्चापम्हलौ तलाहतिकेसरयोः ॥ ५४ ॥ एतयोरेतौ निपात्येते । चच्चा । पम्हलो । खंधलट्ठि-खधमसौ स्कन्धयष्टौ ॥ ५५ ॥ अस्यामेतौ स्याताम् । खधलट्ठी । खधमसो । तंबकिमिअग्गिआयाविन्द्रगोपे ॥ ५६ ॥ अस्मिन्नेतौ स्याताम् । तबकिमी । अग्गिआयो । अनर्थे विहडणो ॥ ५७ ॥ जोअणजोअडौ खद्योते ॥ ५८ ॥ जोइअदरवल्लहौ खद्योत-कातरयोः ॥ ५९ ॥ क्रमादनयोरेतौ स्याताम् । जोइओ । दरवल्लहो । मोइअपडरगौ महेशग्रामेशयोः ॥ ६० ॥ अनयोरेतौ क्रमात् स्त ॥ संकरसग्गहौ रथ्यामुक्तयोः ॥ ६१ ॥ अनयोरेतौ क्रमात् स्याताम् । सकरो । सग्गहो । अर्थदरे पअरो ॥ ६२ ॥ सुरायां मइमोहिणी ॥ ६३ ॥ दुर्दुरे धारावासो ॥ ६४ ॥ आस्यकलहयोः कमलं ॥ ६५ ॥ अनयोरय स्यात् । वेणुसाअधुअराऔ भ्रमरे ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । वेणुसाओ । धुअराओ । अस्मिन् प्रकरणे लिङ्ग-व्यत्यय मयोगाधीन ॥

इति गहिआघा ॥

---

वा पुआय्याद्याः ॥ १ । २ । ११० ॥

पुआई इत्यादय शब्दा स्वराद्यादेशविशेषिता वा निपात्यन्ते ।

उन्मत्तपिशाचयोः पुआई ॥ १ ॥ अनयोरय निपात्यते । पुआई । ऊणदिअमानन्दिते ॥ २ ॥ तुधुरो दोधुरो ॥ ३ ॥ माहिवाओ माघवाते ॥ ४ ॥ सइकोडी शतकोटी ॥ ५ ॥ माइदो माकन्दे ॥ ६ ॥ ओंदुरो उन्दुरौ ॥ ७ ॥ आळिआ

---

१ पिशाचोन्मत्तयो T २ स्यात् T

आल्याम् ॥ ८ ॥ अस्मिन्नय स्यात् । आळिआ । तणसोल्लि तृण-शून्ये ॥ ९ ॥ अस्मिन्नय स्यात् । तणसोल्ली । अरिष्टदैत्यकाकेषु रिट्ठो ॥ १० ॥ एष्वय स्यात् । रिट्ठो । द्रुते दुरिअ ॥ ११ ॥ अस्मिन्नय स्यात् । दुरिअ । किरो किरौ ॥ १२ ॥ वामलूरो वामलूरौ ॥ १३ ॥ विसो वृषमूषिकयोः ॥ १४ ॥ अनयोरय स्यात् । विसो । वद छन्दे ॥ १५ ॥ छन्दे अय स्यात् । वद । हेरिंबो हेरम्बे ॥ १६ ॥ हेरम्बे अय स्यात् । हेरिंबो । चिक्क स्तोके ॥१७॥ स्तोके अय स्यात् । चिक्क । चरणायुधे चलणाओहो ॥ १८ ॥ अस्मिन्नय स्यात् । चलणाओहो । उन्मत्तादुश्शीलयोर्वअणिआ ॥ १९ ॥ अनयोरय स्यात् । वअणिआ । उन्मत्ता दु शीला च । महालयपक्षे महलयपक्खो ॥ २० ॥ अस्मिन्नय स्यात् । महलयपक्खो । चचरीके चचरिओ ॥ २१ ॥ अस्मिन्नयम् । चचरिओ । मुसलं मांसले ॥ २२ ॥ इत्यादि ॥

अपुण्णगाः क्तेन ॥ ३ । १ । १३२ ॥

अपुण्णादयः शब्दा क्तप्रत्ययेन सह निपात्यन्ते ।

आक्रान्ते अपुण्ण ॥ १ ॥ अस्मिन्नय स्यात् । अपुण्ण । अम्मच्छपहट्ठावसबद्धाचिरतरदृष्टयोः ॥ २ ॥ असबद्धे अचिरतरदृष्टे च एतौ क्रमात् स्याताम् । अम्मच्छ । पहट्ठो । उल्लोकमरिअओसण्णाः त्रुटिते ॥ ३ ॥ एते त्रयस्त्रुटिते निपात्यन्ते । उल्लोक्को । मरिओ । ओसण्णो । गुञ्जलिअपेञ्जलिऔ संघटिते ॥ ४ ॥ अस्मिन्नेतौ निपात्येते । गुञ्जलिओ । पेञ्जलिओ । पसल्लिअगळद्धअऊरुमल्लाः प्रेरिते ॥ ५ ॥ निपात्यन्ते । पसल्लिओ । गळद्धओ । ऊरुमल्लो । अवकीर्णे उक्खणं ॥ ६ ॥ अस्मिन्नय स्यात् । उक्खणो । ओसट्टविहिमिहिऔ विकसिते ॥ ७ ॥ एतौ विकसिते स्त । ओसट्टो । विहिमिहिओ । अर्दिते उद्धरिअ ॥ ८ ॥ उपसर्पिते उल्लिओ ॥ ९ ॥

---

१ P omits it २ एते चत्वार प्रेरिते निपात्यन्ते T

अस्मिन्नर्थे स्यात् । उल्लिओ । छिन्नच्छिद्रतयोः कडद्दरिअं ॥ १० ॥ अनयोरर्थे निपात्यते । कडद्दरिअ । झडिअपरिहाइओ श्रान्तपरिक्षीणयोः ॥ ११ ॥ अनयोरेतौ क्रमात् स्याताम् । झडिओ । परिहाइओ । उक्कज्जणिक्कज्जतडकडिअउच्चुगा अनवस्थिते ॥ १२ ॥ [1]अस्मिन्नेते निपात्यन्ते । उक्कज्जो । णिक्कज्जो । तडकडिओ । उच्चुगो । उद्धअपुव्वगउच्चुरणउचल्ला: शान्तमुण्डितोच्छिष्टोद्विग्नेषु ॥ १३ ॥ एषु चत्वारः क्रमान्निपात्यन्ते । उद्धओ । पुव्वगो । उच्चुरणो । उचल्लो । चकितक्रान्तयोरुव्विड ॥ १४ ॥ अनयोरर्थे निपात्यते । उव्विड । वहइअमाकासिअ च पर्याप्ते ॥ १५ ॥ पर्याप्ते द्वयं निपात्यते । वहिइअ । आकासिअ । उविद्धणाळीगोरडितहिद्धा-स्रस्ते ॥ १६ ॥ चत्वार एते निपात्या । उविद्धो । णाळी । गोरडित । हिद्धो । क्रुद्धे उव्विव्वो ॥ १७ ॥ क्रुद्धे अयं स्यात् । उव्विव्वो । सिद्दविद्दौ सुप्तोत्थिते ॥ १८ ॥ सिद्दो । विद्दो । ओमसउव्विकावपक्ष्तअलपितयोः ॥ १९ ॥ अनयोरेतौ क्रमात् स्त । ओमसो । उव्विको । अवरोपितमुक्तयोर्विअट्टत ॥ २० ॥ अनयोरर्थे प्रयोज्य । विअट्टत । ओहरणणिमिअओअविआ आघ्राते ॥२१॥ एते त्रय आघ्राते निपात्यन्ते । ओहरण । णिमिअ । ओअविअ । ऊसविअमुद्धान्ते ॥ २२ ॥ उद्भ्रान्तेयं स्यात् । ऊसविअ । रुद्धगलितयोराहिद्धो ॥ २३ ॥ अनयोरर्थे स्यात् । आहिद्धो । वातिते णिसुद्धो ॥ २४ ॥ अस्मिन्नर्थे स्यात् । णिसुद्धो । उम्मड्डुणिचुड्डावुद्वृत्ते ॥ २५ ॥ उद्वृत्ते एतौ स्याताम् । उम्मड्डो । णिचुड्डो । उड्डिअजूसआवुत्क्षिप्ते ॥ २६ ॥ एतौ उत्क्षिप्ते स्याताम् । उड्डिओ । जूसओ । सुप्ते णिज्जलववणिद्दवड्डुवाः ॥ २७ ॥ सुप्ते चत्वारो

[1] अनवस्थिते एते चत्वारः स्युः T [2] T drops उच्चुरण [3] T drops उच्छिष्ट [4] क्रमादेते स्युः T [5] T has after this उच्चूरणमुच्छिष्टे । उच्छिष्टे उच्चूरणमिति स्यात् । [6] स्युः for एते निपात्या T. [7] स्त T

निपात्यन्ते । णिज्जो । लयवो । णिहुवो । लुक्को । रिअं लूने ॥ २८ ॥ असिन्नय स्यात् । रिअ । विक्रीतनिम्नीकृतयोरुज्झणिअ ॥ २९ ॥ त्यक्ते जड ॥ ३० ॥ असिन्नय स्यात् । जट । शुष्कनिम्नीकृतयोरुज्झिअ ॥ ३१ ॥ अनयोरय स्यात् । उज्झिअ । घढं स्पष्टीकृते ॥ ३२ ॥ असिन्नय स्यात् । घड । जलान्तःपतिते डिडवो ॥ ३३ ॥ जलावगाहिन्यय प्रयोज्य । डिडवो । आकीर्णे ओसडिओ ॥ ३४ ॥ असिन्नय स्यात् । ओसडिओ । गुलिअ मथिते ॥ ३५ ॥ गुलिअ । उम्मरिअमुन्मूलिते ॥ ३६ ॥ असिन्नय स्यात् । उम्मरिअ । उत्क्षिप्ते परिचिअउगाहिअउडाहिआः ॥ ३७ ॥ उत्क्षिप्ते त्रयो निपात्या । परिचिअ । उगाहिअ । उडाहिअ । उदाहिअ च ॥ ३८ ॥ अयमप्युत्क्षिप्ते निपात्य । उदाहिअ । रसिते हेसिअदुद्दुमिओ ॥ ३९ ॥ रसिते द्वय निपात्यम् । हेसिअ । दुदुमिअ । परितोषिते चित्तविअओ ॥ ४० ॥ असिन्नय निपात्यते । चित्तविअओ । परोट्टझपिअपल्लिचाः पर्यस्ते ॥ ४१ ॥ पर्यस्ते त्रयो निपात्या ॥ परोट्ट । झपिअ । पल्लिच । प्रमृष्टे अम्हत्तो ॥ ४२ ॥ असिन्नय प्रयोज्य । अम्हत्तो । आघूर्णिते गअ ॥ ४३ ॥ असिन्नय स्यात् । गअ । व्यासक्तप्रवृद्धयोरोवेअओ ॥ ४४ ॥ अनयोरय निपात्य । ओवेअओ । ओअम्मअओहामिआवभिभूते ॥ ४५ ॥ एतावभिभूते निपात्यौ । ओअम्मओ । ओहामिओ । अभिलषितप्रत्युद्दतद्वेषु रगिल्लवच्छुद्दलिअअक्तताः ॥ ४६ ॥ ऐषु त्रय क्रमान्निपात्या । रगिल्लो । वच्छुद्दलिओ । अक्तत्तो । जअलुकरमौ क्षुन्नक्षीणयोः ॥४७ ॥ अनयोरेतौ क्रमात् स्त । जअलो । करमो । उपरतक्षीणयोः कथो ॥ ४८ ॥ अनयो कथो इति

---

१ P and My drop it २ °विआओ M ३ निपात्य M ४ °विआओ M ५ अह्मत्तो My ६ निपात्य M ७ अह्मत्ती My ८ स्यात् M ९ एतेष्वेते निपात्या M १० अनयो क्रमादेतौ निपात्यौ M

निपात्य । कथो । पेक्किअ वृषरटिते ॥ ४९ ॥ अस्मिन्नयं स्यात् । पेक्किअ ॥ अकिअमालिङ्गिते ॥ ५० ॥ अस्मिन्नयं स्यात् । अकिअ । उँलुओसिअचिमिणोसालिआ रोमाञ्चिते ॥ ५१ ॥ अस्मिन् एते त्रय प्रयोज्या । उलुओसिअ । चिमिण । [illegible] । असंगिअमासक्ते ॥ ५२ ॥ अय स्यात् । अस्संगिअ । [illegible] क्तश्रान्तपुलकितेषु आरोइअ ॥ ५३ ॥ चतुर्षु [illegible] प्रयोज्यम् । आरोइअ । अपहृतशरीरादिव्यथितयोरोच्छंदिअं ॥ ५४ ॥ अनयोरय स्यात् । ओच्छदिअ । छडिअ छन्ने ॥ ५५ ॥ अस्मिन्नयं स्यात् । छडिअ । ऊसुम्भिअमूसअं चोपधानीकृते ॥ ५६ ॥ एतावुपधानीकृते स्याताम् । ऊसुम्भिअ । ऊसअ । आविअं प्रोते ॥ ५७ ॥ प्रोते अय स्यात् । आविअ । दर्पिते अवहिट्टो ॥ ५८ ॥ अस्मिन्नय स्यात् । अवहिट्टो । प्रवृद्धगृहागतयोरारोढो ॥ ५९ ॥ अनयोरय स्यात् ॥ आरोढो । अन्विष्टे उडिअ घसणिअं च ॥ ६० ॥ अन्विष्टे एतौ स्याताम् । उडिअ । घसणिअ । [illegible] घुग्घुस्सुअ ॥ ६१ ॥ अस्मिन्नय स्यात् । घुघुस्सुअ । [illegible] ढोच्छूडौ ॥ ६२ ॥ एतावारूढे प्रयोज्यौ । उस्दो । [illegible] । आविलिओ कुपिते ॥ ६३ ॥ कुपिते अय स्यात् । [illegible] । फडिअं प्रीणिते ॥ ६४ ॥ अस्मिन्नय स्यात् । [illegible] । [illegible] गलितविरक्तयो' ॥ ६५ ॥ अनयोरय स्यात् । [illegible] । उओग्गिओ ॥ ६६ ॥ अस्मिन्नय स्यात् । उओग्गिओ । [illegible] लितामूलोच्चलितमूढविघटितेषु गुम्मइओ ॥ ६७ ॥ [illegible]

स्यात् । गुम्मइओ । भ्रमे परिरिग्गअं ॥ ६८ ॥ अस्मिन्नय स्यात् । पडिरिग्गअ । प्रकटिते परिअट्टिअ ॥ ६९ ॥ परिच्छन्ने परिअट्टनिअ ॥ ७० ॥ पेरिअट्टनिअ । ओप्प मृष्टे ॥ ७१ ॥ ओप्प । फोजरिअमापूरिते ॥ ७२ ॥ फोजरिअ । ओमल्ल घनीभूते ॥ ७३ ॥ ओमल्ल । वेट्टइअ पडइअ च संकुचिते ॥ ७४ ॥ अस्मिन्नय स्यात् । वेडइअ । छदिअ प्रस्नुते ॥ ७५ ॥ अस्मिन्नय स्यात् । छदिअ । प्रयतपरिजागरितयोरणुल्लिअओ ॥ ७६ ॥ अनयोरय स्यात् । अणुल्लिअओ । पज्जत्तर दलिते ॥ ७७ ॥ अस्मिन्नय स्यात् । पेज्जत्तर । अनिवृत्ते उल्लुहुल्लुअ ॥ ७८ ॥ अस्मिन्निद स्यात् । उल्लुरिल्लपमिति केचित् । वप्पिअमारोग्गरिअमुल्लुअ च रक्ते ॥ ७९ ॥ अथ एते निपात्या । वप्पिअ । आरोग्गरिअ । उल्लअ । उपणमहिरोइअमहुमाअमप्पुण्ण च पूर्णे ॥ ८० ॥ पूर्णे चत्वारो निपात्या । उपण । अहिरोइअ । अहुमाअ । अप्पुण्ण । सन्मुखमागते पच्चाणिओ ॥ ८१ ॥ अस्मिन्नय स्यात् । पच्चाणिओ । अग्गुच्छ प्रमिते ॥ ८२ ॥ प्रमिते अथ स्यात् । अग्गुच्छ । पङ्डाविअ समापिते ॥ ८३ ॥ अस्मिन्नय स्यात् । पङ्डाविअ । अभिपीडिते वारङ्ग ॥ ८४ ॥ अस्मिन्निद निपात्यम् । वारङ्ग । उद्दारिअ रणद्रुते ॥ ८५ ॥ अतैतन्निपात्यम् । उद्दारिअ । उज्झमाण पलायिते ॥ ८६ ॥ अत्रेद स्यात् । उज्झमाण । अर्जिते विढ्ढिअ ॥ ८७ ॥ अस्मिन्निद स्यात् । विढ्ढिअ । छिक्क स्पृष्टे ॥ ८८ ॥ अस्मिन्निद निपात्यम् । छिक्क । हृते पणिल्लिअ ॥ ८९ ॥ हृते इद

१ Omitted in P, My २ Omitted in P, My ३ Omitted in My, P ४ Omitted in P, My ५ P and My omit the line ६ Omitted in My, P ७ Omitted in My, P ८ अनिवृत्तेय निपात्य M ९ Omitted in My, P १० Omitted in P, My ११ P and My omit it १२ Omitted in P, My १३ Omitted in P, My १४ स्पृष्टे इद स्यात् P, My १५ Omitted in My, P १६ Omitted in P, My

स्यात् । पैणिछिअ । आविन्ने पिंडओ ॥ ९० ॥ अत्राय स्यात् । पिंडेओ । साणिअणिक्खाविओ शान्ते ॥ ९१ ॥ असिन्नेतौ स्याताम् । साणिओ । णिक्खाविओ । पिट्टे आप्पणसोहिअवक्कसमराइआः ॥ ९२ ॥ पिट्टे चत्वारो निपात्या । आप्पण । सोहिअ । वक्क । समराइअ । वड्डिमवडिसाअअवसण्णा॰ स्रुते ॥ ९३ ॥ स्रुते त्रयो निपात्या । वड्डिम । वडिसाअ । अवसण्ण । स्रुतमित्यर्थ । वंडेइअ पीडिते ॥ ९४ ॥ असिन्नय स्यात् । वडेइअ । विरचित-विप्रगृहीतयोरग्गहिओ ॥ ९५ ॥ अनयोरय स्यात् । अग्गहिओ । अवधूते गैविअ ॥ ९६ ॥ असिन्निद निपात्यम् । गैविअ । निपिद्धे विड्डुच्छओ ॥ ९७ ॥ असिन्नय निपात्य । विड्डुच्छओ । निर्गते णग्गठो ॥ ९८ ॥ अत्राय निपात्य । णग्गठो । वोद्दिकिपाडावत्था-सक्तस्खलितयोः ॥ ९९ ॥ अनयोरेतौ क्रमात् स्त । वोद्दी । किपाडो । पविरजवलोट्टौ स्निग्धस्मृतयोः ॥ १०० ॥ अनयोरेतौ क्रमात् स्याताम् । पविरंजवो । लोट्टो । उवडिअमुदूळिअमोणअमवनते ॥ १०१ ॥ अवनते त्रयो निपात्या । उवडिअ । उदूळिअ । ओणअ । उज्झळिअ प्रक्षिप्तविक्षिप्तयोः ॥ १०२ ॥ अनयोरय स्यात् । उज्झळिअ । मत्ते अविहिओ ॥ १०३ ॥ मत्ते अय स्यात् । अविहिओ । परिक्खाइअओ परिक्षीणे ॥ १०४ ॥ परि-क्षीणे अय स्यात् । परिक्खाइअओ । क्षुते चिंकं पिलुअ च॥१०५॥ अस्मिन्नेतौ स्याताम् । चिंकं । पिलुअ । पविग्घ निस्मृते ॥ १०६ ॥ अस्मिन्नय स्यात् । पविग्घ । उज्झसिअमवडाहिअमुक्कासमुत्कृष्टे ॥ १०७ ॥ उत्कृष्टे त्रयो निपात्या । उज्झसिअ । अवडाहिअ ।

---

१ Omitted in P, My २ Omitted in My, P ३ पडइअ M ४ पडइअ M ५ गव्विअं M ६ गव्विअ M ७ Omitted in My, P ८ णग्गहो My ९ Omitted in P, My १० भवन M ११ त्रय एते स्यु M १२ Omitted in My, P १३ छिक M १४ छिक M १५ Omitted in P, My

उक्कास । हल्लप्फविअ त्वरिते ॥ १०८ ॥ त्वरिते अय स्यात् । हल्लप्फविअ । उद्दारिअमुत्खाते ॥ १०९ ॥ उत्खाते अय स्यात् । उद्दारिअ । याते जारिद्दो ॥ ११० ॥ अस्मिन्नय स्यात् । आरिद्दो । उल्लिक दुश्चेष्टिते ॥ १११ ॥ अस्मिन्नेतन्निपात्यम् । उल्लिक । उच्चदिअं मुषिते ॥ ११२ ॥ मुषिते इद स्यात् । उच्चदिअ । ऊगिअप ल्लिअमिआ अलकृते ॥ ११३ ॥ अलङ्कृते त्रयो निपात्या । ऊगिअ । पल्लिअ । मिअ । उवअ प्रसृते ॥ ११४ ॥ प्रसृते अय स्यात् । उवअ । उच्छिरणमुच्छिष्टे ॥ ११५ ॥ ओमरिओ आकीर्णे अक्षिसकोचात् सज्ञिते च ॥ ११६ ॥ गत्तल्हिक्कगावसत्तो गते ॥११७॥एते चत्वारो निपात्या । गत्तो । ल्हिक्को । गावो । सत्तो । ओसिअनिच्छुरिअपडिहत्था अपूर्वे ॥ ११८॥ अपूर्वे त्रयो निपात्या । ओसिअ । विच्छुरिअ । पडिहत्थो । णिउर छिन्नजीर्णयोः ॥११९॥ अनयोरय स्यात् । णिउरं । अध्यासिते उच्चल्लोप्पल्लोय्पल्लाजडिओत्तत्ताः ॥ १२० ॥ अध्यासिते पञ्चैते निपात्या । उच्चल्लो । उप्पल्लो । उय्पल्लो । अजडिओ । उत्तत्तो । ओअल्लअमुक्कद च विप्रलब्धे ॥ १२१ ॥ अस्मिन्नेतौ निपात्यौ । ओअल्लअ । उक्कद । लिम्हे उडंबो ॥ १२२ ॥ अस्मिन्नय स्यात् । उडंबो । छुहिअ पार्श्वपरावृत्ते ॥ १२३ ॥ अस्मिन्नय स्यात् । छुहिअ । अपिट्ठवलट्ठ पुनरुक्ते ॥ १२४ ॥ अस्मिन्नेतौ स्याताम् । अपिट्ठ । वलट्ठ । आस्तृते अण्णासअ ॥ १२५ ॥ अस्मिन्नय स्यात् । अण्णासअ । अनष्टे अपडिअ ॥ १२६ ॥ अस्मिन्नय स्यात् । अपडिअ । अणहवणअ भर्त्सिते ॥ १२७ ॥ अस्मिन्नय निपात्य । अणहवणअ । उक्करिअमरि-

---

१ Omitted in My, P २ Omitted in P, My
३ Omitted in P, My ४ Omitted in P, My
५ Omitted in P, My ६ Omitted in P, My ७ विप्रलब्धे द्वय स्यात् M ८ Omitted in P, My ९ Omitted in P, My १० उच्चडिअ M ११ उच्चडिअ M १२ भर्त्सिते M
१३ Omitted in My, P

अओघिअविवअइसआ विस्तीर्णे ॥ १२८ ॥ विस्तीर्णे पञ्चैते निपात्यन्ते । उक्करिओ । मरिओ । ओघिओ । विवओ । इसओ । रुद्धवामावगळवेण्णधुत्ता आक्रान्ते ॥ १२९ ॥ आक्रान्ते पञ्चैते निपात्यन्ते । रुद्धो । वामो । अवगळो । वेण्णो । धुत्तो । आरोपितखण्डितयोरुक्करिअउरविअउक्कडिअअण्णंकव्वरिअ च ॥ १३० ॥ एतयो पञ्चैतानि निपात्यन्ते । उक्करिअ इत्यादि । चूर्णिते आडविओ ॥ १३१ ॥ असिन्नय स्यात् । आडविओ । उल्लुअं धुहअ ओउल्लिअं उक्कोसिअ उच्चरिअ वणनच्चडिअं च पुरस्कृते ॥ १३२ ॥ पुरस्कृते पडेते निपात्या । वलकिअ उत्सङ्गिते ॥ १३३ ॥ असिन्नय स्यात् । वलकिअ । उय्यकिअं पुञ्जीकृते ॥ १३४ ॥ अत्रैतत् प्रयोज्यम् । उय्यकिअ । पिङ्गइअ प्रशान्ते ॥ १३५ ॥ अत्रैतन्निपात्यम् । पिङ्गइअ । उल्लुहुडिअ हेपिअ हक्किअ हेममण चोन्नते ॥ १३६ ॥ उन्नते चत्वार एते निपात्या । उल्लुहुडिअ । हेपिअ । हक्किअ । हेसमण । निवासिते ज्झहुराविअ णिगमिअ च ॥१३७॥ अस्मिन्नेतौ स्याताम् । ज्झहुराविअ । णिगमिअ । उच्छिल्लो अवजीर्णे ॥ १३८ ॥ असिन्नय स्यात् । उच्छिल्लो । गुम्मिओ मूलाच्छिन्ने ॥ १३९ ॥ अस्मिन्नय स्यात् । गुम्मिओ । जलधौते णिप्पणिओ ॥ १४० ॥ अस्मिन्नय स्यात् । णिप्पणिओ । आच्छादिते वेक्खलं ॥ १४१ ॥ अत्रैतत् स्यात् । वेक्खल । रक्षिते तेंत्तुरिअ ॥ १४२ ॥ अत्रैतत् स्यात् । तेत्तुरिअ । प्रोक्षिते रोकअ ॥ १४३ ॥ अस्मिन्नय

१ निपात्या My २ अनयोरेते पञ्च स्यु T ३ पञ्चैते प्रयोज्या My, P ४ Omitted in My, P ५ प्रयोज्या My, P ६ Omitted in P, My ७ पुञ्जीकृते इद स्यात् My ८ Omitted in P, My ९ अत्रेद My, P १० Omitted in P, My ११ My and P drop एते १२ Omitted in My, P १३ Omitted in P, My १४ Omitted in P, My १५ Omitted in My, P १६ पक्किअ M [illegible] M, १८ तुत्तिरिअ M १९ रक्षिते एतत् M २० [illegible] २१ अयमत्र स्यात् P, My

स्यात् । रोवेंअ । पीतपतितपेटितेषु परचो ॥ १४४ ॥ एष्वेव स्यात् । वेंग्घो । वर्धितपरिनुत्तयोः मढिअग्गिअ ॥ १४५ ॥ अनयोरेव स्यात् । मैंढिअग्गिअ । दारिते उज्जलो ॥ १४६ ॥ अत्रेद प्रयोज्यम् । उँघलो । वञ्चिते जगाडिओ ॥ १४७ ॥ अत्रैतत् स्यात् । अँवाडिओ । ऊरिमकिअनद्धअपसुला रूढे ॥ १४८ ॥ रूढे नव एते निपात्या । ऊरिमकिओ । नज्झओ । पसुलो । अपूर्ण-गूढस्खलितेषु गोमिदो ॥ १४९ ॥ त्रिष्वेव निपात्य । गोमिदो । आरूढचूर्णितपीतोद्विग्नेषु समाओ ॥ १५० ॥ चतुर्ष्वेव निपात्य । समाओ । दृष्टे उत्तुर्वो ॥ १५१ ॥ दृष्टे अय निपात्य । उत्तुर्वो । इत्यादि । दृष्टानुपसर्गवृष्टवार्येविद्वद्वाचस्पतिविष्टरश्रवप्रचेतस्प्रोक्ता-दीना क्तिनादिप्रत्ययान्ताना चाग्निचित्सोमसुदित्यादीना सुग्लैःसुम्लै इत्यादीना च पूर्वै कविभिरप्रयुक्ताना प्रतीतिवैषम्यकर प्रयोगो न कर्तव्य । शब्दान्तरैरेव तेऽर्थोऽभिधेय । यथा दृष्ट दृष्ट वाचस्पति-र्गुरु विष्टरश्रवा हरिरित्यादि । घृष्टशब्दस्य सोपसर्गस्य प्रयोग इष्यत एव । मन्दरअडपरिघट्ट । मन्दरतटपरिघृष्टम् ॥

इति श्रीमदखिलविद्यापरिवारदक्षिणामूर्तिमहादेवप्रसादलब्धविद्यावैभवसरसीमरालस्य दत्तकसाहित्यसार्वभौमश्रीवल्लरियसश्वरभट्टोपाध्यायतनयकोण्डभट्टोपाध्यायशिष्येण सवाम्बिकागर्भशुक्तिमुक्तामणिना दक्षिणामूर्तिमहादेवकिङ्करेण सकलविद्वत्कविमित्रेण लक्ष्मीधरेण विरचितायां षड्भाषाचन्द्रिकायां प्राकृतप्रक्रियायां सुबन्तविभाग समाप्त ॥

---

१ Omitted in P My २ Omitted in P, My ३ Omitted in My, P ४ Omitted in P, My ५ Omitted in P, My ६ P and My omit the instances ७ गमिरो M ८ स्यात् M ९ गमिदो M, Omitted in My, P १० घृष्टा °M ११ घृष्ट M १२ M omits वाक्य १३ M drops इत्यादीना च १४ तथाभिधेया M १५ °विधेन T १६ T has कवृ for दत्तक १७ T has स्व for सर १८ °तनयेन T १९ M drops कोण्डभट्टोपाध्याय २० M drops शुक्ति २१ M drops महादेव २२ °युतेन T २३ समाप्त T २४ T adds श्रीमेधादक्षिणामूर्तये नम ॥

श्रीहयग्रीवाय नम ।

नमो ब्रह्मादिदेवानामज्ञानध्वान्तभानवे ।
सर्वार्थबद्धदीक्षाय दक्षिणामूर्तये नमः ॥ १ ॥

## अथ तिङन्तप्रक्रिया निरूप्यते ।

भू सत्तायाम् । भू इति स्थिते

होहुवहवा भुवेस्तु ॥ ३ । १ । १ ॥

भवतेर्धातोर्हो हुव हव इति त्रय आदेशा भवन्ति । अकार उच्चारणार्थ । हो इति स्थिते । अनुक्तमन्यन्यायेन लटस्तिनादौ सति

लटस्तिप्ताविजेच् ॥ २ । ४ । १ ॥

लट प्रथमपुरुषैकवचनयोस्तिप्तयो प्रत्येक इच् एच् इति भवत । चकारौ 'हुरेचिति' इति विशेषार्थौ । अत्र लड्ग्रहण लकारमात्रोपलक्षणम् । तेन लट लस्येत्यर्थ । अनुक्तमन्यन्यायेन शबादिप्राप्तौ

न शपाम् ॥

अत्र शबादीना प्रयोगो न भवति । इति शबादिप्रतिषेध । होइ ॥

अत एवैच् से ॥ २ । ४ । ७ ॥

लट प्रथमपुरुषस्यैकत्वे विहितो य एच् मध्यमपुरुषस्यैकत्वे विहितो य से तावकारान्तादेव भवतो नान्यस्मात् । इत्यदन्तविषयत्वात् हो इ इत्यत्र तौ न भवत ॥ 'हलोक्' इत्यत 'अक्' इत्यनुवर्तमाने

त्वनत' ॥ २ । ४ । ६९ ॥

अकारात्तवर्जितादजन्ताद्धातोरगागमो भवति ते । होअइ । होअए । अत्रागमे कृते अदन्तत्वादेच् भवति ॥

---

१ चन्द्रचारुवराङ्गाय for सर्वार्थबद्धदीक्षाय P, My २ T gives this section after the treatment of शौरसेनी and other dialects ३ आदेशा स्यु T ४ हुरचेति M ५ विशेषणार्थी T ६ °मात्रोपलक्षणार्थम् ... ७ नास्ति T ८ °पुरुषैकत्वे My ... drops तु

लड्लटोश्च जर्जारौ ॥ २ । ४ । ३८ ॥

लड्लटोर्वर्तमानभविष्यतोश्चकाराद्विध्यादिषु च सर्वत्र पुरुषेषु वचनेषु च विहितस्य प्रत्ययस्य स्थाने जजाविल्येतौ रितौ वा भवत । रित्वाद् द्वित्वम् । इति लट्प्रथमपुरुषस्यैकस्थाने एतौ भवत । होज्ज । होज्जा । पक्षे । होइ । सर्वलकारेषु जर्जाराविति केचित् ॥ 'लड्लटोश्च जर्जारौ' इत्यधिकृत्य

मध्ये चाजन्तात् ॥ २ । ४ । ३९ ॥

अजन्ताद्धातो प्रकृतिप्रत्यययोर्मध्ये चकारात् प्रत्ययाना स्थाने जर्जारौ तु भवतो लड्लटोर्विध्यादिषु च । इति होइकारयोर्मध्ये भवत । होज्जइ । होज्जाइ । इत्येकवचनम् । तिङन्तेपि द्विवचनस्य बहुवचनमेव ॥

झिझौ न्तिन्तेइरे ॥ २ । ४ । ४ ॥

लट प्रथमपुरुषबहुत्वे वर्तमानयो झिझयो न्ति न्ते इरे इति त्रय आदेशा भवन्ति । होन्ति । होन्ते । होइरे । अत्रैव 'होहुवहवा भुवेस्तु' इत्यत 'भुवे' इत्यधिकृत्य

हुरचिवि ॥ ३ । १ । ५ ॥

चिद्वर्जिते प्रत्यये परे भुवेर्हुरित्यादेशो भवति । हुति । हुन्ते । हुइरे । इत्याद्यपि बोद्धव्यम् । बहुलाधिकारात् कचिदेकत्वेपि इरे दृश्यते । सूसइरे ताण तारिसो कण्ठो । शुष्यति तासा तादृश कण्ठ । 'स्पर्गेचो दि' इत्युकारस्य दीर्घ । 'त्वनत' इत्यगागम । होअन्ति । होअन्ते । होअइरे । 'मध्ये चाजन्तात्' इति जर्जारौ । होज्जन्ति । होज्जन्ते । होज्जइरे । अत्र पूर्वोदाहरणद्वये 'सयोगे' इति ह्रस्वे सति जारोपीदमेवोदाहरणम् । होज्जाइरे इत्यत्र निमित्ताभावान्न 'सयोगे' इति ह्रस्व । होज्ज । होज्जा ॥ मध्यमपुरुषैकवचने

१ T omits वा २ अपि ता M, T ३ च स्थान M ४ इत्येतौ स्त T ५ तौ भवत M, अपि स्त T ६ आदेशा स्यु T

सिप्थासृसेसि ॥ २ । ४ । २ ॥

'लट' इत्यनुवर्तते । लट परस्मैपदात्मनेपदमध्यमपुरुषैकत्वे वर्तमानयो सिप् थास् इत्येतयो प्रत्येक से सि इत्येतौ भवत । होसि । नात्र से । अनदन्तत्वात् । 'त्वनन' इत्यागमे कृते अदन्तत्वात् से सि । होअसि । होअसे । 'मध्ये चाजन्तात्' इति जर्जौरौ । होज्जसि । होज्जासि । 'लट्लटो —' इति जर्जौरो । होज्ज । होज्जा ॥ मध्यमपुरुषबहुवचने

थध्वमित्थाह्चौ ॥ २ । ४ । ५ ॥

लटो मध्यमपुरुषबहुवचनयो थध्व इत्येतयो प्रत्येक इत्थाह्चू इत्यादेशौ भवत । होइत्था । होह । होअइत्था । होअह । होज्ज इत्था । होज्जह । होज्जाइत्था । होज्जाह । होज्ज । होज्जा । बहुलाधिकारात् क्वचित् प्रथमपुरुषैकवचनेपि इत्था । जन्ते रोइत्था । यत्ते रोचते ॥ उत्तमपुरुषैकवचने

मिर्मिनिटौ ॥ २ । ४ । ३ ॥

लट परस्मैपदात्मनेपदोत्तमपुरुषैकवचनयो मिप् इट् इत्येतयो प्रत्येक मि इति भवति । होमि । बहुलाधिकारात् मिनिटोरादेशस्य मेरिकारलोपश्च । बहु वण्णिउ ण्ण सक्क । बहु वर्णितु न शक्नोमि । 'त्वनत' इत्यागमे 'अदेल्लुक्यादृत्तोरत' इत्यत 'आत्' 'अत' इति चानुवर्तते ।

तुमौ ॥ २ । ४ । १६ ॥

अदन्ताद्धातोरुत्तमपुरुषैकवचनादेशे मौ परे आत्व तु भवति । इति धात्ववयवस्यागागमस्य विकल्पेनात्वे होआमि । होअमि । मौपरे इत्वमिति केचित् । होइमि ॥

वा लट्लोट्टत्सु ॥ २ । ४ । २० ॥

---

१ स' T २ उत्तमैकवचने P, My ३ स्यात् T ४ होअमि । होआमि T

'अदेल्लुकि—' इत्यादे 'एत्' इत्यनुवर्तते 'अत' इति च । एषु परेषु अत एत्व वा स्यात् । इत्यगागमस्यैव धात्ववयवस्य वा एत्वे । होएमि । होअमि । होज्जमि । होज्जामि । इद सूत्र ल्ड्लोटो सर्ववचनेषु अगागमस्य वा एत्वविषयकम् । क्वचित् भवति । जमइ । क्वचिदात्वमपि । सुणाइ । 'वा लड्लोट्—' इत्यनेनैव एत्वे होज्जेमि । होज्जमि । 'लड्लटोश्च जर्जारौ' इति जर्जारौ भवत । हुज्ज । हुज्जा ॥

उत्तमपुरुषबहुवचने

मोमुमसहिट ॥ २ । ४ । १६ ॥

उत्तमपुरुषस्य बहुत्वे वर्तमानयो मस् महिट् एतयो मो म मु इति त्रय आदेशा भवन्ति । हुमो । हुम । हुमु ॥ 'त्वनन' इत्यगागमे सति 'अदेल्लुक्यात्त्वोरत' इत्यत्र 'अत' इत्यधिकृत्य 'तुमौ' इति 'अस्तु' इति च

मोमुमुष्विच ॥ २ । ४ । १७ ॥

अकारान्ताद्धातो मो म मु इत्येतेषु परेषु अत इत्व चकारादात्व च वा स्यात् । इत्यगागमस्यैव धात्ववयवस्य इत्वे आत्वे च । हुइमो । हुआमो । पक्षे । हुअमो । 'वा लड्लोट्—'इत्येत्वे । हुएमो । हुइम । हुआम । होअम । हुएम । हुइम । हुइमु । हुआमु । हुअमु । होएमु । 'मध्ये चाजन्तात्' इति जर्जारौ । हुज्जिमो । होज्जमो । होज्जामो । होज्जेमो । एव मम्वोरप्युदाहार्यम् । 'लड्लटोश्च जर्जारौ' । हुज्ज । हुज्जा । एवमजन्ताना लटि रूप नेयम् । हवादीना हलन्ताना तु भेद । हृ व इति स्थिते । अनुक्रमन्यन्यायेन 'उपदेशेजनुनासिक इत्' इत्यकारलोप । सुखोच्चारण प्रयोजनम् । 'हलोऽ' इत्यगागम । इजादयश्च । हवइ । हवए । 'लड्लटोश्च—' इति जर्जारौ ॥

ज्ञाज्जे ॥ २ । ४ । २१ ॥

'अदेल्लुक्यात्त्वोरत' इत्यत्र 'अत' इति 'एत्' इति चानुवर्तते ।

---

१ उत्तमस्य बहुवचन M २ इत्येता प्रत्येक मो म मु इत्यादेशानापद्येते T ३ इत्यनुवर्तते M

'वा लङ्लोट्—' इत्येतो 'वा' इति च । जोर्जे इत्येतयो परयोरत एत्व वा स्यात् । हवेज्जा । हवेज्ज । 'अत' इत्येव । हुज्जा । स्वतोनजन्तत्वात् 'मध्ये चाजन्तात्' इत्यय विधिर्न भवति । 'वा लङ्लोट्—' इत्येत्व वा । हवेइ । हवइ । हवन्ति हवन्ते । हवइरे । एवमेदन्तेपि । मध्यमे । हवसि । 'अत एवेचूसे' इति से । हवसे । हवेसि । हवेज्जा । हवेज्ज । हवज्जा । हवज्ज । हवइत्था । हवह । हवेइत्था । हवेह । हवज्जा । हवज । हवेज्जा । हवेज्ज । उत्तमे 'तुमौ' इत्यात्वम् । हवामि । हवमि । मावित्वमिति केचित् । हविमि । हवेमि । जर्जारौ च । 'मोमुम्बिच' इति आदितौ वा । 'लङ्लोट्—'इत्येत्व च । हवमो । हवामो । हविमो । हवेमो । हवमु । हवामु । हविमु । हवेमु । हवम । हवाम । हविम । हवेम । हवेज्जा । हवेज्ज । एवमन्येषा हलन्ताना लटि रूप नेयम् ॥ 'हुहुवहवा भुवेस्तु' इत्यत 'भुवे' इत्यधिकृत्य

**पृथक्स्पष्टे णिव्वडः ॥ ३ । १ । २ ॥**

पृथग्भूते स्पष्टे च कर्तरि भुवे णिव्वड इत्यादेशो भवति । णिव्वडइ । णिव्वडए । पृथग्भवति । स्पष्टो भवति वेत्यर्थ ॥

**प्रभौ हुप्पः ॥ ३ । १ । ३ ॥**

'भुवे' इत्यनुवर्तते । 'तु' इति च । प्रभुकर्तृकस्य भुवे हुप्प इत्यादेशो वा भवेति । हुप्पइ । हुप्पए । प्रभवतीत्यर्थ । पक्षे पहवइ । बहुलाधिकारादन्यदपि । परिभवति समवति उद्भवतीत्यर्थेपि । परिभवइ । समवइ । उब्भवइ ॥ लुङ्लङ्लिट्सु

**भूतार्थस्य सिहिअहि ॥ २ । ४ । २२ ॥**

भूतार्थे विहितो यो लुङादिप्रत्यय तस्य लुङो लङो लिटश्च स्थाने प्रत्येक सि हिअ हि इति त्रय आदेशा भवन्ति । उत्तरत्र 'हल ईअ' इति विधानात् स्वरा तादेवाय विधि । होसि । होहिअ । होहि ।

१ इति च M २ ... ३ आदेशा स्यु T ४ स्वरा तादेशोय विधि T

'स्वनन' इत्यगागम । होअमि । होअहिअ । होअहि । सर्वत्र अभूत् अभवत् बभूव वा । गादयस्तु तिसृष्वेव । अस्मिन् शास्त्रे वर्तमाना-र्थवाचिनोपि भूतार्थवाचित्वमस्तीति लडादेशा इआदयोपि भवन्ति । तेन 'लङ्लृटोश्च जारौ' 'मध्ये चाजन्तात्' इति जारौ सर्वत्र भवतु । तथा च होइ । होन्ति । होसि । इत्यादीनि सर्वाणि रूपा-ण्युदाहर्तव्यानि । ग्रन्थविस्तरभयान्न लिख्यन्ते । एवमन्येषामजन्तानां भूतार्थेषु रूपनिर्णय ॥ हलन्तानां तु

हल ईअ ॥ २ । ४ । २३ ॥

'भूतार्थस्य' इत्यनुवर्तते । भूतार्थे वर्तमानयो हलन्तात् परयो तिसयो ईअ इत्यादेशो भवति । हसीअ । हसइ । हसन्ति । इत्यादि हलन्तरूपाणि सर्वाण्युदाहर्तव्यानि । एवमन्येषां हलन्तानां भूतार्थ-वाचिषु रूपं ज्ञेयम् ॥ लृलुटो

भविष्यति हिरादिः ॥ २ । ४ । २५ ॥

भविष्यदर्थे विहितप्रत्यये परे तस्यैव हिरित्यादि प्रयोक्तव्य । पूर्ववदिजादय । होहिइ । बहुलाधिकारात् क्वचिदेकपदेपि सन्धि । होही । भविष्यति । भविता वा । बहुत्वे हि । होहिन्ति । इत्यादि लड्वत् । लकारात् प्राक् हिकार एवाधिक । मध्यमे । होहिसि । होज्जहिसि । होज्जाहिसि । होहिज्ज । होहिज्जा । होहित्था । होहिह । इत्यादि सर्वं लड्वत् । लकारात् प्राक् हिकार एवाधिक ॥ उत्तमे

हास्सा मिमोमुमे वा ॥ २ । ४ । २६ ॥

'भविष्यति' इत्यनुवर्तते । 'ओदि' इति च । भविष्यदर्थे विहितेषु उत्तमपुरुषादेशेषु मिमोमुम इत्येतेषु परेषु एषामेवादि हास्सा इत्येतौ वा प्रयोक्तव्यौ । पक्षे हिरपि । होहामि । होस्सामि । अत्र रित्वाद् द्वित्वम् । होहामो । होस्सामो । होहामु । होस्सामु । होहाम । होस्साम ।

---

१ वा स्यात् T  २ M and T drop 'ओदि' इति च

पक्षे । होहिमि । होहिमो । होहिमु । होहिम । क्वचित्तु हा न भवति ॥
'ड मेस्छात्त' इत्यत 'मे इत्यनुवर्तते 'भविष्यति' इति च

सद् ॥ २ । ४ । ३३ ॥

धातो परतो भविष्यति काले मे स्थाने सद् इति वा भवति ।
रित्याद् द्वित्वम् । होहिस्स । पक्षे । होहिमि ॥

हिस्साहित्था मुमोमस्य ॥ २ । ४ । २७ ॥

'वा' इत्यनुवर्तते 'भविष्यति' इति च । भविष्यति काले मु मो म इत्येतेषा स्थाने हिस्सा हित्था इत्येतौ धातो परतो वा प्रयोक्तव्यौ । होहिस्सा । होहित्था । पक्षे । होहिमु । इत्यादि । पूर्ववत् जर्जारो चै । 'त्वनत' इत्यगागमादिलङ्कृत् । एवमन्येषामजन्ताना भविष्यति रूपम् ॥ हलन्ताना तु भविष्यति अगागमे कृते 'अदेलुश्यात्स्वोरत' इत्यत अत' इत्यधिकृत्य 'मोममुप्विस' इत्यत 'इत्' इति च

एच क्त्वातुतव्यभविष्यति ॥ २ । ४ । १९ ॥

क्त्वातुतव्येषु भविष्यत्कालविहिते च प्रत्यये परत अत एत्व चकारादित्व भवति । हवेहिइ । हविहिइ । हवेहिज्ज । हवेहिज्जा । हविहिज्ज । हविहिज्जा । हवेहिति । हवेहिते । हविहिति । हविहिते । इत्यादि । जर्जारो च । मध्यमे । हवेहिसि । हविहिसि । हवेहित्था । हविहित्था । हवेहिह । हविहिह । जर्जारो च । उत्तमे । हवेहिमि । हविहिमि । हवेहामि । हविहामि । हवेस्सामि । हविस्सामि । हवेहिस्स । हविहिस्स । जर्जारो च । हवेहिमो । हविहिमो । हवेहामो । हविहामो । हवेस्सामो । हविस्सामो । एव मन्वोरपि । हवेहिस्सा । हविहिस्सा । हवेहित्था । हविहित्था । जर्जारो चै । एवमन्येषा हलन्ताना भविष्यति रूपम् ॥ लोटि

एकस्मिन् प्रथमादेर्विध्यादिषु दुसुमु ॥ २ । ४ । ३५ ॥

---

१ T drops तु २ M omits च ३ हलधिरस्य M, T ४ इति च M, T ५ हविहिस्या । हवेहिस्सा M ६ T drops च ७ P and My add नेयम्

लिङ्लोटो प्रथममध्योत्तमपुरुषैकवचनानां स्थाने दु सु मु इति क्रमाद्भवन्ति । होदु । लिङ्लोटोराशीरर्थे उकारान्तस्यैव प्रयोग इति केचित् । तदा दलोपः । दकारोच्चारणं भाषान्तरार्थमित्यपरे । प्राकृते विध्यादिषु होउ । अत्र 'प्रायो लुक्—'इति दलोपः । होसु । होमु ॥

**वहौ न्तुहमो ॥ २ । ४ । ३६ ॥**

लिङ्लोटो प्रथममध्योत्तमबहुवचनानां स्थाने न्तु ह मो इति क्रमाद् भवन्ति । होन्तु । होह । होमो ॥

**सोस्तु हि ॥ २ । ४ । ३७ ॥**

विध्यादिषु 'एकस्मिन्—'इति सूत्रविहितस्य सोर्मध्यमपुरुषैकवचनस्य स्थाने हि इत्यादेशो वा भवति । होहि । होसु । पूर्ववत् 'मध्ये चाजन्तात्' इति जर्जारौ । तदा । होज्जदु । होज्जादु । होज्ज । होज्जा । एवं वचनान्तरेष्वपि जर्जारावूह्यौ ॥ लिङि

**त्विज्जालिङः ॥ २ । ४ । ३४ ॥**

लिङो जर्जाभ्यां परं इकारो वा प्रयोक्तव्यः । होज्जइ । होज्जाइ । इयान् विशेषः । शेषं पूर्ववत् । एवमन्येषामजन्तानां लिङ्लोटो रूपम् । हलन्तानां तु 'वा लुड्लोट्लृट्छत्पु' इति वा एत्वम् । हवेउ । हवउ । हवेन्तु । हवन्तु । हवेज्ज । हवज्ज । हवेज्जा । हवज्जा ॥ मध्यमे 'सोस्तु हि' इत्यत 'सो' इत्यनुवर्तमाने

**लुगिज्जहीज्जस्विज्जेतः ॥ २ । ४ । ३८ ॥**

अदन्ताद्धातो मध्यमैकवचनादेशस्य सो स्थाने लुक् इज्जहि इज्जसु इज्जे इति चत्वार आदेशा भवन्ति । हव । हविज्जहि । हविज्जसु । हविज्जे । पक्षे । हवसु । हवेसु । हवेज्ज । हवेज्जा । 'त्विज्जालिङ' इति इत्वं च । हवेज्जइ । हवेज्जाइ । शेषं पूर्ववत् । एवमन्येषां हलन्तानां रूपं नेयम् ॥ लङि

---

१ क्रमात् सु T २ °मिति केचित् T ३ T has प्रत्ययानां before स्थाने ४ स्थान् T ५ स्थात् T

माणन्तौ ल्ट च लृङः ॥ २ । ४ । ४१ ॥

लृङो माण न्त इत्यादेशौ सर्वत्र पुरुषेषु वचनेषु भवत । लिङ्वा-त्तित्यम् । चकारात् ज्जज्जौ च । होमाण । होन्त । होज्जमाण । होज्जन्त । होज्जामाण । होज्ज । होज्जा । हलन्ताना तु । हवमाण । हवन्त । हवेज्ज । हवेज्जा । एवमन्येष्वजन्तेषु हलन्तेषु च धातुष्वनया प्रक्रियया सर्वलकाररूपाणि प्रयोज्यानि ॥

---

अथ केचिदेधादयो धातव प्रदर्श्यन्ते ।

एध वृद्धौ । अगागम । 'खघथधभाम्' इति धस्य हत्वम् । इजादय । एहइ । एहए । शेष हववत् । डुपचष् पाके । अनुक्तम-न्यन्यायेनानुबन्धलोप । अक् । 'प्रायो लुक्—'इति चलोप । पअइ । पअए ॥

सोल्लपउल्लौ पचेः ॥ ३ । १ । ३८ ॥

पचते सोल्ल पउल्ल इत्यादेशौ भवत । सोल्लइ । पउल्लइ । टुनदि समृद्धौ । अक् । णदइ । णदए । ध्वसु गतौ । अक् । 'त्यथ्यद्यध्या क्वचित्—' इत्यादिना ध्वस झकार । झसइ । झसए । पक्षे । 'लवराम्—' इति वलोप । धसइ । धसए । व्येञ् संवरणे । 'मनयाम्' इति यलोप । वेइ । 'त्वनत' इत्यगागमे । वेअइ । वेअए । अद भक्षणे । अक् । प्रायोग्रहणाद् दलोपाभाव । अदइ । अदए ॥ असेर्विशेष उच्यते । अस भुवि । लटि

त्थसेर्म्हम्होम्हि ममोमिना ॥ २ । ४ । ८ ॥

'मिर्मिविटो' इति विहितमिना 'मोमम मसहिङ्' इति निर्दिष्ट-ममोभ्या च सह असे स्थाने यथायोग म्ह म्हो म्हि इत्यादेशा वा

---

१ च स्व T २ सर्वलकाराणां रूपाणि P, My ३ M and T drop धस ४ My and P drop it, T has एहए only ५ स्व T ६ वलोपे T ७ दकारलोपाभाव M

भवन्ति । गअम्हि । गनोम्हि । गअम्हो । गेअ ह । गना ह्म । गुरुारस्थाप्रत्ययाद्प्रयोग एव तम्येन्यवसीयते । पक्षे । सिद्धास्थि' इति अस्थि सामान्यपाठ । अत्थि ॥

सिना स्सि ॥ २ । ४ । ९ ॥

'असे' इत्यनुवर्तते । अस्तेर्धातो सिना मध्यमपुरुषैकवचनादेशेन सह सि इत्यादेशो लिद् भवति । लित्वान्नित्यम् । णिट्ठुरो स्सि । निष्ठुरो यदसि ॥

त्रिटास्थि ॥ २ । ४ । १० ॥

अस्तेस्तिडा सह अत्थि इत्यादेशो भवति । अत्थि सो । अस्ति स इत्यर्थ । अत्थि ते । सन्ति त इत्यर्थ । मध्यमे । अत्थि तुम । असि त्वमित्यर्थ । अत्थि तुम्हे । स्थ यूयमित्यर्थ । उत्तमे । अत्थि [illegible] । अस्म्यहम् । अत्थि अम्हे । स्मो वयमित्यर्थ ॥ लुङ्लङ्लिट्सु 'भूता-र्थस्स सिहिआरि' इत्यत 'भूतार्थस्य' इत्यधिकृत्य

अहेसासी तेनास्तेः ॥ २ । ४ । २४ ॥

अस्तेर्धातोर्भूतार्थप्रत्ययेन सह अहेसि आसि इत्यादेशौ भवत । अहेसि । आसि । आसीत् । आसन् । आसी । आस्त । आसम् । आस । इत्यर्थ । लुङ्लिटो । अस्तेर्भ्वादेशे । अभूत् । बभूव । इत्यादि सञ्चारणीयम् । इद त्वादेशद्वय सर्ववचनेषु पुरुषत्रये च साधा-रणम् । तेन भूतलकारमात्रे अस्तेरिदमेव रूपद्वयम् । लोटि सिद्धावस्था-पेक्षया अस्तु इत्यत्र 'स्त' इति स्तस्य थत्वे । अत्थु । सन्तु । इति च दृश्यते । लिङि । स्यादित्यत्र 'स्याद्भव्य—'इति सूत्रेण यात् प्रागित्वम् । यलोप । अन्त्यहलो लोपश्च । सिअ । अन्येषु लकारेषु अनुक्तमन्य-न्यायेन 'अस्तेर्भू' इति भूधातोरेव प्रयोग ॥ शीङ् स्वप्ने ।

योरेङ् ॥ २ । ४ । ६५ ॥

---

१ गअह्म M, T २ ज्ज My ३ तुह्मो M ४ अह्मो M ५ स्स T

इश्र उश्र, यु तस्य योर्धातोरिवर्णोवर्णयो' एङ् एदोतौ यथासङ्ख्य भवत । इवर्णस्य एकार । उवर्णस्य ओकार । इत्येत्वे । 'शोस्सल्' । सेइ । 'त्वनत ' इत्यक् । सेअइ । सेअए । इत्यादि । हुवत् ॥ ब्रून् व्यक्ताया वाचि ।

उवर्णस्यावः ॥ २ । ४ । ६४ ॥

धातोरन्त्यस्य उवर्णस्य अव इत्यादेशो भवति । रेफलोप । बवइ । बवए । 'योरेङ्' इत्योत्वे । बोइ । एव हुङ् पूङ् प्रभृतय ॥ हु दानादानयो ।

णो ह्रश्च चिजिपूश्रुधुस्तुहुल्लूभ्यः ॥ २ । ४ । ७२ ॥

एभ्य परो ण इत्यागमो वा भवति । तत्सनियोगेन दीर्घस्य ह्रस्वश्च । हुणइ । हुणए । पक्षे उवर्णस्य अव इत्यादेश । हवइ । हवए । नात्र 'योरेङ्' इत्युकारस्यौत्वम् । अनन्तरविषयत्वात् तस्य । परत्वुवर्णस्य अव इत्यादेश । बहुलाधिकाराण्णागम क्वचिद्विकल्पित । उच्चेणइ । उच्चेइ । जेणइ । जेइ । ओहाङ् गतौ । अनुक्तमन्यन्यायेनानुबन्धलोप । 'त्वनत ' इत्यगागम । हाअइ । हाअए । पक्षे । हाइ । डु धाञ् धारणपोषणयो । अनुबन्धलोप । धैइ । धाअइ । धाअए । पक्षे । धाइ ॥

धो दहश्रदः ॥ २ । ४ । १३१ ॥

श्रदित्यव्ययात् परस्य दधातेर्दह इत्यादेशो भवति । 'अश्रद ' इति पर्युदासादन्त्यहलो लोपो न भवति । रेफलोप । सत्वम् । सद्दहइ । सद्दहए । दिवि क्रीडादौ । अक् । दिवइ । दिवए ॥ अथ पुरुपादयोपि प्रदर्श्यन्ते ।

रुपगेचो दिः ॥ २ । ४ । ६८ ॥

रुपादिष्वादेरचो दीर्घो भवति । रुप । रूसइ । रूसए । शुप ।

---

१ धून् M २ भवति वा T ३ M drops न ४ क्षर M
५ इत्यादेश स्यात् T M

रूसइ । तुष । तूसइ । पुष । पूसइ । शिष । सीसइ । षूङ् प्राणिप्रसवे । उवर्णस्य अव इत्यादेश । सवइ । सवए । णद् बन्धने । णहइ । णहए । पुङ् अभिषवे । अवादेश । सवइ । सवए । सोइ । अशू व्याप्तौ । अश । अमइ । असए । चिञ् चयने । 'णो इश्च चिजि—'इत्यादिना णागम । चिणइ । चिणए । पक्षे । 'येरेङ्' इत्येत्वम् । चेइ । चेए । 'त्वनत' इत्यस्यैत्वे च । चेअइ । चेअए । तुद व्यथने । अड् । तुदइ । तुदए । दलोपोऽपि । तुअइ । तुअए ॥ दशतिदहत्योर्विशेष । 'ह्लोह्' इत्यगागमे 'येतम इति तो' इत्यत 'तो' इत्यधिहृत्य 'टो ट' इत्यत 'ट' इति च ।

दंशदहोः ॥ १ । ३ । ३४ ॥

दशतिदहत्योर्धात्वोस्तवर्गस्य डकारो भवति । डसइ । डसए । डहइ । डहए ॥ दीप्यतौ

डो दीपि ॥ १ । ३ । ४६ ॥

पूर्वसूत्रात् 'तो' इत्यनुवर्तते । दीप्यतेस्तोस्तवर्गस्य डत्वम् । डिप्पइ । प्रदीप्यतौ 'दोहदप्रदीप—'इत्यादिना दोर्लत्वम् । पलिप्पइ ॥ मृङ् मरणे

आर् उः ॥ २ । ४ । ६६ ॥

धातोर्ऋवर्णस्य अर इत्यादेशो भवति । मरइ । मरए ॥ गम्लृ गतौ

छो गमिष्यमासाम् ॥ २ । ४ । ५० ॥

गम् इष् यम् आस् एषामन्त्यस्य छकारो रित् स्यात् । गच्छइ ॥

गमिरणुवज्जावज्जसाक्कुसोक्कुसाइञ्छाप्यवहरावसेहचदअपरिअलपरिअल्लवोल्लपरिणिसपच्छक्कणीणाणिम्महवच्चदाणिल्लुक्कभणीणिवहान् ॥ २ । १ । ९७ ॥

---

१ पूस् M २ My and P drop it ३ My and P drop मरणे

गमिरणुवज्जादीनादेशान् प्राप्नोति । अणुवज्जइ । अवज्जसइ । अक्कुसइ । उक्कुसइ । अइच्छइ । अईइ । अवहरइ । अवसेहइ । वदअइ । परिअलइ । परिअल्लइ । वोलइ । परिणिसइ । पेच्छड्डइ । णीणइ । णिम्महइ । वच्छदइ । णिल्लुकइ । रमइ । णीइ । णिवहइ ॥
दशिर् प्रेक्षणे

**दशिरोअक्खणिअच्छावअच्छचज्जावअज्झपुलअपुलोअदेक्खा-वअक्खपेच्छावआसपासणिअसचवावक्खाः ॥ २ । ४ । १५३ ॥**

दशिर् प्रेक्षण इत्यय धातु ओअक्ख णिअच्छ अवअच्छ चज्ज अवअज्झ पुलअ पुलोअ देक्ख अवअक्ख पेच्छ अवआस पास णिअ सचव अवक्ख इति पञ्चदशादेशानापद्यते । ओअक्खइ । णिअच्छइ । अवअच्छइ । चज्जइ । अवअज्झइ । पुलअइ । पुलोअइ । देक्खइ । अवअक्खइ । पेच्छइ । अवआसइ । पासइ । णिअइ । सचवइ । अवक्खइ । इति पञ्चदशादेशा ॥ गम्दशोर्भविष्यति

**इच्छ दशिगम इजादौ हिलुङ् च वा ॥ २ । ४ । २८ ॥**

'भविष्यति हिरादि' इत्यत 'भविष्यति' इत्यनुवर्तते । दृशू गम् आभ्या धातुभ्या भविष्यदादेशेषु इँच् इत्यादिषु परेषु डित् अच्छ इत्यय भवति हेर्वा लुक् च । डित्वादन्त्यस्याजादेर्लुक् । दच्छिइ । दच्छिहिइ । दच्छिति । दच्छिहिंति । दच्छिसि । दच्छिहिसि । दच्छिइत्था । दच्छिहिईत्था । दच्छिह । दच्छिहिह । दच्छिमि । दच्छिहिमि । दच्छिहामि । दच्छिस्सामि । दच्छिस्स । दच्छिहिस्स । दच्छिमो । दच्छिहिमो । दच्छिहामो । दच्छिस्सामो । दच्छिहिस्सा । दच्छिहित्था । दच्छिम । दच्छिहिम । इत्यादि । मोनत् मम्भोरप्युदा-

१ आपद्यते T २ पचदइ M ३ My and P drop प्रेक्षणे
४ इत्यनुवर्तते M, T ५ दशिर् M ६ इत्यादिषु P, My ७ इच्छा P, My ८ °इच्छा My, P

हार्यम् । एव गमेरपि ॥ भिदिर् विदारणे । छिदिर् द्वैधीकरणे । 'अन्त्यस्य वचिमुचि—'इत्यादे 'अन्त्यस्य' इत्यनुवर्तते ।

छिदिभिदो न्दः ॥ २ । ४ । ५४ ॥

अनयोरन्त्यस्य न्दं इत्यादेशो भवति । [3]छिन्दइ । भिन्दइ । भविष्यति विशेष ।

छिदिभिदिनिदो डेच्छ ॥ २ । ४ । २९ ॥

'भविष्यति हिरादि' इत्यत 'भविष्यति' इत्यनुवर्तते। 'हिलुक् च' इति च 'इजादो' इति च । छिदादिभ्यो भविष्यति इजादिषु परेषु डित् एच्छ इत्यय स्यात् हिलुक् च वा । चेच्छिइ । चेच्छिहिइ । चेच्छिंति । चेच्छिहिंति । चेच्छिसि । चेच्छिहिसि । चेच्छित्था । चेच्छिहित्था । चेच्छिह । चेच्छिहिह । चेच्छिमि । चेच्छिहिमि । चेच्छिहामि । चेच्छिस्सामि । एव हौ । चेच्छिस्स । चेच्छिहिस्स । चेच्छिमो । चेच्छिहिमो । चेच्छिहामो । चेच्छिस्सामो । चेच्छिहिस्सा । चेच्छिहित्था । एव मन्चोरपि। एव भिदविदोरपि रूपाण्युदाहर्तव्यानि ॥ वच परिभाषणे । मुच्लृ मोक्षणे । रुदिर् अश्रुविमोचने । श्रु श्रवणे । भुज पालनाभ्यवहारयो । अक् । वअइ । मुअइ । रुअइ । एषु भविष्यति

डोच्छ वचिमुचिरुदिश्रुभुजः ॥ २ । ४ । ३० ॥

वच्यादिभ्यो धातुभ्यो भविष्यदर्थे इजादिषु परेषु डित् ओच्छ इति भवति हिलुक् च वा । वचि । वोच्छिइ । वोच्छिहिइ । वोच्छिंति । वोच्छिहिंति । वोच्छिसि । वोच्छिहिसि । वोच्छित्था । वोच्छिहित्था । इत्यादि भिदिवत् । एव मुचादीनामुदाहार्यम् ।

---

१ न्ध P, My २ न्द P, My ३ छिन्धइ My ४ भिन्धद My ५ भिदादिभ्य M and P ६ My has मेच्छिइ । मेच्छिहि etc T has छेच्छिइ, छेच्छिहि, etc ७ छेच्छिहा P, My ८ छेच्छिहिहा P, My

